❀ श्रीश्रीगौरहरिर्जयति ❀

# सिद्धान्तरत्नम्




अथवा

गोविन्दभाष्यपीठकम्

## श्रीमद्बलदेवविद्याभूषण-विरचितम्

तदीयटिप्पन्या सहितञ्च



प्रकाशक—

बाबा कृष्णदास

प्रकाशित-ग्रन्थ-संख्या:— १३२

❀ श्रीश्रीगौरहरिर्जयति ❀

# ❀ सिद्धान्तरत्नम् ❀

अथवा—

## गोविन्दभाष्यपीठकम्

श्रीमद्बलदेवविद्याभूषणविरचितञ्च

तदीयटिप्पन्या सहितञ्च

प्रकाशक:—

**कृष्णदासबाबा**

कुसुमसरोवर, राधाकुण्ड

[ मथुरा ]

सम्बत् २०२२

श्रीश्रीनित्यानन्दप्रभोर्जयन्ती

( माघशुक्लात्रयोदशी )



न्यौछावर ४)

मुद्रक:—गौरहरिप्रेस, कुसुमसरोवर, राधाकुण्ड, [मथुरा]

# समर्पणपत्रम्



भज-निताई गौर राधे श्याम ।
जप-हरे कृष्ण हरे राम ॥

जिन्होंने शताधिक अप्रकाशित प्राचीनगोस्वामि-
ग्रन्थों को अन्धकारगह्वर से उद्धार कर
सबके हस्तामल कराया है, उन नवद्वीप,
हरिबोलकुटी निवासी, नित्यधाम-
प्राप्त, बन्धुवर श्रीहरिदासदास-
बाबाजीमहाराज के पुनीत
स्मरण में यह ग्रन्थरत्न
समर्पित है ।



❀ श्रीमद्बलदेवविद्याभूषणविरचितं ❀

श्रीगोविन्दभाष्यपीठाख्यं

# ❀ सिद्धान्तरत्नम् ❀

वेदास्तथा स्मृतिगिरो यमचिन्त्यशक्तिं
सृष्टिस्थितिप्रलयकारणमामनन्ति ।
तं श्यामसुन्दरमविक्रियमात्ममूर्त्तिं
सर्वेश्वरं प्रणतिमात्रवशं भजामः ॥ १ ॥

गजपतिरनुकम्पासम्पदा यस्य सद्यः
समजनि निरवद्यः सान्द्रमानन्दमृच्छन् ।

---

❀ नमः पूर्णप्रमितये श्रीगोविन्दाय ❀

यस्य श्रीमन्नामपीयूषवर्षैरासीद्विश्वं धूततापं किलैतत् ।
स्वाविर्भावोल्लासितानन्दसिन्धुर्जीयात् स श्रीकृष्णचैतन्यचन्द्रः ॥
सान्द्रानन्दस्यन्दिगोविन्दभाष्यं जीयादेतत् सिन्धुगाम्भीर्यसंभृत् ।
यस्मिन् सद्यः संश्रुते मानवानां मोहच्छेदी जायते तत्त्वबोधः ॥

आलस्यादप्रवृत्तिः स्यात् पुंसां यद्ग्रन्थविस्तरे ।
सिद्धान्तरत्ने संक्षिप्ता टीप्पणी क्रियतेऽत्र तत् ॥

अथ सोऽयं श्रीगोविन्दैकान्ती बलदेवापराख्यो विद्याभूषणो ब्रह्मसूत्रेषु गोविन्दभाष्याभिधानं बिबरणं निर्माय तत्परिपोषाय सिद्धान्तरत्नाख्यं तत्पीठं निर्मातुकामः साक्षाद्भगवतोऽर्चाय-

निवसतु मम तस्मिन् कृष्णचैतन्यरूपे
मतिरतिमधुरिम्णा दीप्यमाने मुरारौ ॥२॥
देवाभ्यर्थनमन्दरेण मथिताद् भक्तीन्दिराऽभूद्यतः
श्रीमद्भागवताख्यनिजर्रतरुः सत्सूत्ररत्नोत्करः ।

---

माणस्य श्यामसुन्दरस्य भक्तिमङ्गलमाचरति-वेदास्तथेति । सर्वेश्यरं बयं भजामः , प्रणत्यादिकया भक्त्यानुकूलया इत्यर्थः । तं किं गुणकमित्यपेक्षायामाह-यं वेदास्तथा स्मृतयः सृष्ट्यादिकारणमामनन्त्यभ्यस्यन्ति । "तथा साहश्यनिर्द्देशे" इति श्रीधरः । कथमेवं तत्राहः-अचिन्त्येति । ननु तथापि महत् कार्यं कुर्वतस्तस्य श्रमादिलक्षणो विकारः स्यात्तत्राह - अविक्रियमिति । संकल्पमात्रेण तत् कुर्वतो न कोऽपि तद्गन्ध इति भावः । आत्मा विज्ञानानन्दलक्षणो मूर्तिरस्येति सुवर्णप्रतिमाबदन्तर्वहिर्भेदशून्यं सान्द्रानन्दविज्ञानमिति परमपुमर्थत्वमुक्तम् । तथाभूतस्याप्यतसीपुष्पवन्नीलबर्णत्वमाह-श्यामेति । तेन सुध्यानत्वम , प्रणतिमात्रेति सुखाराध्यत्वं स्निग्धत्वं च । तस्मिन्नीदशत्वाविभानमविद्यातिमिरबिमुष्टदृष्टीनामेवेति बोध्यम् ॥१॥

अथ स्वाभीष्टे महाप्रभौ रसिकानन्दे च स्वधीनिवेशं ततोऽर्थयते-गजेति । अत्र गजपतिरुत्कलाधीशः प्रतापरुद्रः गोपालदासाख्यातः करीन्द्रश्च । निरवद्यस्त्यक्तराज्याभिमानस्त्यक्तपशुभावश्च । कृष्णचैतन्यरूपे शचीसुतात्मनि मुरारौ कृष्णे , पक्षे परेशतया कृष्णचैतन्यं निरूपयति - मुरारौ तन्नामके स्वपूर्वेचतुर्थे । श्लेशोऽत्रालङ्कारः ॥२॥

अथ निखिलकुमतविमर्द्दकं बादरायणस्य भयवतो बिजयमाह - देवेति । बिकसितार्थं पद्यम । ज्ञानं प्रकृतिजीवेश्वराणां



दीव्यद्गीतिसुधांशुकामृतरुचिर्ज्ञानं च धन्वन्तरिः
सश्रीव्यासमहाम्बुधिर्विपते प्रीत्यै समन्तात् सताम् ॥३
गोविन्दाभिधमिन्दिराश्रितपदं हस्तस्थरत्नादिव-
त्तत्त्वं तत्त्वविदुत्तमौ क्षितितले यौ दर्शयाञ्चक्रतुः ।
मायावादमहान्धकारपटलीसत्पुष्पवन्तौ सदा
तौ श्रीरूपसनातनौ विरचिताश्चर्य्यौ सुवर्य्यौ स्तुमः ॥४

इह हि सुख-दुःख-प्राप्तिपरिहारयोर्लोकप्रवृत्तिर्दृश्यते । तौ चोपेयभूताबुपायमन्तरा न संभवेताम् । अतः सारासार-

---

मिथो विवेकेन बोधः । साङ्गरूपकमेतत् । रत्नाधिक्याबिर्भावेणान्याम्बुधेराधिक्याद् व्यतिरेकः । भक्तीन्दिरादीनामभूतक्रियाभिसम्बन्धात्तुल्ययोगिता चात्रालङ्कारः ॥३॥

अथ स्वसिद्धान्तदेशिकौ स्तौति गोविन्देति - तत्त्वं पुरुषोत्तमलक्षणाम् । "तत्त्वं बाद्यप्रभेदे स्यात् स्वरूपे परमात्मनि" इति बिश्वः । अत्र वतिः साधुत्वार्थम, तद्वत्प्रत्यक्षीभबदिति देयम् । एवं क्वचिदन्यत्रापि ज्ञेयम् । मायावादरूपा या महान्धकारपटली तस्या विनाशाय सत्पुष्पबन्तौ तापक्षयहृदयत्वात् लाञ्छनदोषाभावात् शोभमानौ सहोदितौ चन्द्रसूर्य्यौ "एकयोक्त्या पुष्पबन्तौ दिबाकरनिशाकरौ" इत्यमरः । ईदशाकारत्बाद्विरचितेत्यादिलक्षणौ ॥४॥

भगवद्व्यासकृतया मीमांसया परिनिष्पन्नं परामार्थतत्त्वमुपादित्सुस्तदन्यकृता मीमांसाः प्रत्याचिख्यासुरवतारयति-इहेति । लोकानां सुखप्राप्तौ दुखपरिहारे च प्रवृत्तिरस्ति । किन्तु ते तत्रोपायं न जानन्ति तेषां तत्सिद्धये महर्षयस्तं बदन्तीत्यर्थः । तत्रादौ कपिलमतं दर्शयति—तत्र प्रकृतीति , त्रिवि-

**त्रिचारज्ञा महर्षयस्तत्रोपायं प्रकीर्त्तयन्ति । तत्र प्रकृतिपुरुषा-विवेकादस्य त्रिविधदुःखोत्पादः तद्विवेकात्पुनरनाद्यविवेक-निवृत्तौ पुरुषं प्रति निवृत्ताधिकारा प्रकृतिर्भवतीति तस्य त्रिविधस्य दुःखस्य प्रध्वंसः स्यात् । स च कार्योऽपि नित्यः**

~~~~~~

धदुःखेति । आध्यात्मिकमाधिभौतिकमाधिदैविकञ्चेति त्रिविधं दुःखम् । आध्यात्मिकं शारीरं मानसं द्विभेदम । बातपित्तादि-वैषम्यहेतुकं शारीरम् । कामक्रोधादिहेतुकं मानसम् । एतद्द्व-यमान्तरोपायसाध्यत्वादाध्यात्मिकमुक्तम् । मनुष्यपश्वादिहेतु-कमाधिभौतिकम , यक्षराक्षसाद्यावेशहेतुकमाधिदैविकमिति । इदं दुःखत्रयं प्रकृतिमूलकं बिवेकात् प्रकृतेर्बिनिवृत्तौ बिनश्ये-देब । यद्यप्यौषधकामिनीदुर्गमन्त्रोपासनैरस्य निबृत्तिस्तथापि दद्रु वत्पुनरुत्पद्यते मूलस्यानिबृत्तोरतस्तद्विवेकाभ्यास एव तदात्यन्तिकनाशहेतुः । सचेति - भावभूतं घटादिकार्यमनित्यम - भावभूतं घटादिध्वंसकार्यन्तु नित्यम ध्वंसस्य घटादेः पुन-रनाबृत्तोरिति भाबः । स एब दुःखध्वस एब । तस्मात् दुःख-प्रध्वंसात् सानन्दाबाप्तिः । कपिल इति — अग्निवंशजोऽयं निरीश्वरः पञ्चबिंशतितत्त्वबादी । यस्तु कार्द्दमिः कपिलः स बासुदेबः षड्बिंशतितत्त्वबादीति बोध्यम तथाच । पाद्म - बाक्यम्–"कपिलो वासुदेबाख्यः सांख्यं तत्त्वं जगाद ह । ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च ॥ तथैवासुरये सर्व्वं वेदार्थैरुपबृंहितम सर्व्वबेदबिरुद्धञ्च कपिलोऽन्यो जगाद ह । सांख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितम्" ॥ इति । बुद्धिर-चेतना परिणामित्वात् इति कपिलमतं तत्तु न सङ्गच्छते कृत्य-दृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रयीतेः । कृतिः स्वसमानाधिकरणमदृष्टं जनयति, तच्च तादृशं भोगं तद्वत चेतनो-

५ ) सिद्धान्तरत्नम् [ पाद १

**अभावरूपत्वात् । स एवानन्दावाप्तिरित्युपचरित: भारापगमे सुखी संवृत्त इतिवत्, न तु तस्मात् साऽतिरिच्यत इति कपिलः ॥ ५ ॥**

**प्रकृति-पुरुषविवेकाभ्यासवैराग्य-परिपाकात्यमनियमासन-प्राणायामप्रत्याहारधारणाध्यानसंप्रज्ञातसमाधिपूर्वकात्पर-**

~~~~~~

ऽहमित्यादिसामानाधिकरण्यप्रतीतिः । वस्तुतस्तु कर्त्तृभिन्ने चेतने मानाभावः चेतनोऽहं करोमीति प्रतीतेः । परिणामित्वात् चैतन्यांशे भ्रम इति चेत् कृत्यंशे किं नेष्यते ? कर्त्तृचेतनयो-र्भेदाङ्गीकारे सुखदुःखाभाबात् संसारमोक्षयोरनुपपत्तिः । अचे-तनायाः प्रकृतेः कार्य्यत्वात वुद्धेर्न चैतन्यं कार्य्यकारणयोस्ता-दात्म्यात् इति चेन्न असिद्धेः कर्त्तुर्जन्यत्वे मानाभावात् वीत-रागजन्मादर्शनादनादित्वम् अनादेर्नाशासम्भवान्नित्यत्वमिति अचेतनायाः प्रकृतेर्जगत्स्रष्टृत्वं वदन्ती सांख्यस्मृतिर्वेदवि-रुद्धत्वादयुक्तत्वाच्च निरस्तेति ज्ञेयम ॥५॥

अथ पतञ्जलिमतमाह — प्रकृतिपुरुषेति । यमेत्यष्टाङ्ग-योगो दर्शितः । "अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहा यमा" इति, "शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा" इति च पत-ञ्जलेः सूत्रम् । आसनप्राणायामौ ख्यातौ । बिषयेभ्य इन्द्रियाणां बियोजनं प्रत्याहारः , नाभिचक्रनासाग्रादौ निर्बिषयस्य चित्तस्य स्थिरीकरणं धारणा, ध्यानं प्रत्ययैकतानता । संप्रज्ञातेति- वृत्तिमति चित्ते यः ससाधिः स संप्रज्ञातसंज्ञः । पञ्चविधेति - प्रमाणविपर्य-यसंकल्पनिद्रास्मृतयश्चित्तस्य पञ्च बृत्तयः । धर्ममेघेति – परम-पुमर्थहेतुं धर्मं मेहति सिञ्चतीति धर्ममेघः "प्रसंख्याने ऽप्य-कुसीदस्य सर्वथा बिवेकख्यातेर्धर्ममेघः समाधिः" इति पत-

**मेश्वरप्रसादजात् पञ्चविधचित्तवृत्तिनिरोधादेव धर्ममेघशब्दवाच्यादसंप्रज्ञातसमाधेरस्य ताविति पतञ्जलिः ॥६॥**

**देहेन्द्रियादि—विलक्षणो विभुरयमात्मा नवविशेषगुणाश्रयस्तस्य द्रव्यगुणकर्मसामान्यविशेषसमवायानां साधर्म्यवै-**

ञ्जलेः सूत्रम् ( यो० सू० ४ । २६ )। प्रसंख्यानं तत्त्वानां मिथो बिलक्षणस्वरूपपरिभावनं, तस्मिन् सत्यप्यकुसीदस्य फलमलिप्सोः प्रत्ययान्तराणामनुदयेन सर्वप्रकारबिवेकख्यातेः परिपोषाद्धर्ममेघसमाधिर्भवति । तत्र चित्तं वृत्तिहीनमुक्तम । अस्येति पुरुषस्य ॥६॥

अथ बैशेषिकमतं दर्शयति—देहेति - नवेति - बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यसंस्कारा नबात्मनो विशेषगुणाः । प्रागिति - येषां प्रागभावस्तेषामुत्पत्तिरिति भावः। एतन्मते मुक्तौ पाषाणकल्प आत्मा तन्निरसनप्रकारो यथा-वैशेषिकास्तन्त्रार्थभूतान् षट्पदार्थान्द्रव्य — गुणकर्म्मसामा—न्यविशेषसमबायाख्यानत्यन्तभिन्नान् भिन्नलक्षणानभ्युपग —च्छन्ति यथा मनुष्योऽश्वः शश इति । तथात्वञ्चाभ्युपगम्य तद्विरुद्धं द्रव्याधीनत्वं शेषाणामभ्युपगच्छन्ति । तन्नोपपद्यते । कथम ? —यथा हि लोके शशकुशपलाशप्रभृतीनामत्यन्तभिन्नानां सतां नेतरेतराधीनत्वं भवति एवं द्रव्यादीनामप्यत्यन्तभिन्नत्वात्त नैव द्रव्याधीनत्वं गुणादीनां भवितुमर्हति। अथ च भबति द्रब्याधीनत्वं गुणादीनाम । ततो द्रव्यभावे भावात् द्रव्याभावे चाभावात् द्रव्यमेव संस्थानादिभेदादनेकशब्दप्रत्ययभाग् भबति यथा देवदत्त एक एव सन्नबस्थान्तरयोगादनेकशब्दप्रत्ययभाग भवति तद्वत् । तथा सति साङ्ख्यसिद्धान्तप्रसङ्गः स्वसिद्धान्तविरोधश्चापद्येयाताम् । नन्वग्नेरन्य-



**धर्म्याभ्यां तत्त्वज्ञानेन साक्षात्कारादीश्वरोपासनासहितान्नवानां वैशेषिकगुणानां प्रागभावासहवृत्तिर्ध्वंसो भवेत्, स एवानन्दावाप्तिरिति कणादः ॥७॥**

स्यापि भूमस्याग्न्यधीनत्वं दृश्यते सत्यम । भेदप्रतीतेस्तु तत्र अग्निधूमयोरन्यत्वं निश्चीयते । इह तु शुक्लः कम्बलो रोहिणी धेनुः नीलमुत्पलमिति द्रव्यस्य वा तस्य तस्य तेन तेन बिशेषेण प्रतीतमानत्वात् नैव द्रव्यगुणयोरग्निधूमयोरिव भेदप्रतीतिरस्ति। तस्मात् द्रव्यात्मकता गुणष्य। एतेन कर्म्मसामान्यबिशेषसमबायानां द्रव्यात्मकता व्याख्याता। गुणादीबां द्रव्याधीनत्वं द्रव्यगुणयोरयुतसिद्धत्वादिति यद्युच्येत तत्पुनरयुतसिद्धत्वमपृथग्देशत्वं वा स्यात् अपृथक्कालत्वं वा अपृथक्स्वभावत्वं वा ? सर्व्वथापि नोपपद्यते। अपृथग्देशत्वे तावत् स्वाभ्युपगमो विरुध्येत। कथं तन्त्वारब्धो हि पटः तन्तुदेशोऽभ्युपगम्यते न तु पटदेशः। पटस्य तु गुणाः शुक्लत्वादयः पटदेशा अभ्युपगम्यन्ते न तन्तुदेशाः। तथा चाहुर्द्रव्याणि द्रव्यन्तरमारभन्ते गुणाश्च गुणान्तरमिति। तन्तबो हि कारणद्रव्याणि कार्य्यद्रव्यं पटमारभन्ते तन्तुगताश्च गुणाः शुक्लत्वादयः कार्य्यद्रव्ये पटे शुक्लत्वादिगुणान्तरमारभन्त इति हि तेऽभ्युपगच्छन्ति। सोऽभ्युपगमो द्रव्यगुणयोरपृथग्देशत्वेऽभ्युपगभ्यमाने वाध्येत। अथापृथक्कालत्वं अयुतसिद्धत्वमुच्येत सव्यदक्षिणयोरपि गोविषाणयोरयुतसिद्धत्वं प्रसज्येत । अथापृथक्स्वभावत्वेऽयुतसिद्धत्वे न द्रव्यगुणयोरात्मभेदः सम्भवति तस्य तादात्म्येनैव प्रतीय—मानत्वात्। युतसिद्धयोः सम्बन्धः संयोगोऽयुतसिद्धयोस्तु समबाय इत्ययमभ्युपगमो मृषैब तेषां प्राक्सिद्धस्य कार्य्यात् कारण-

स्यायुतसिद्धत्वानुपपत्तेः । अथान्यतरापेक्ष एवायमभ्युपगमः
स्यादयुतसिद्धस्य कार्य्यस्य कारणेन सम्बन्धः समबाय इति ।
एबमपि प्रागसिद्धस्यालब्धात्मकस्य कार्य्यस्य कारणेन सम्बन्धो
नोपपद्यते द्वयायत्तत्वात् सम्बन्धस्य । सिद्धं भूत्वा सम्बध्येत
इति चेत् प्राक् कारणसम्बन्धात् कार्य्यस्य सिद्धावभ्युपगम्य-
मानायामयुत-सिद्ध्यभावात् कार्य्यकारणयोः संसोगविभागौ
न बिद्येते इतीदमुक्तं दुरुक्तं स्यात् । यथा चोत्पन्नमात्रस्याक्रि-
यस्य कार्य्यद्रव्यस्य बिभुभिराकाशादिभिर्द्रव्यान्तरैः सम्बन्धः
संयोग एबाभ्युपगम्यते न समवायः एवं कारणद्रव्येणापि सम्बन्धः
संयोग एब स्यात् न समवायः । नापि संयोगस्य समबायस्य
बा सम्बन्धस्य सम्बन्धिव्यतिरेकेणास्तित्वे किञ्चित् प्रमाणमस्ति ।
सम्बन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमबायशब्दप्रत्ययदर्शनात्
तयोरस्तित्वमिति चेन्न एकत्वेऽपि स्वरूपवाह्यरूपापेक्षया अनेक-
शब्दप्रत्ययदर्शनात् । यथैकोऽपि सन् देबदत्तो लोकस्वरूपं सम्ब-
न्धिरूपं चापेक्ष्यानेकशब्दप्रत्ययभाग् भवति मनुष्यो ब्राह्मणः
शोत्रियो बदान्यो बालो युबा स्थबिरः पिता पुत्रः पौत्रो भ्राता
जामातेति । यथा चैकापि सती रेखा स्थानान्यत्वेन निवेश्यमानै-
कदशशतसहस्रादिशब्दप्रत्ययभेदमनुभवति तथा सम्बन्धिनोरेव-
सम्बन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययार्हत्वं
न व्यतिरिक्तवस्त्वस्तित्वेन इत्युपलब्धिलक्षण - प्राप्तस्यानुप-
लब्धेरभाबो बस्त्वन्तरस्य नापि सम्बन्धिविषयत्वे सम्बन्ध-
शब्द - प्रत्यययोः सन्ततभावप्रसङ्गः स्वरूपबाह्यरूपापेक्षये-
त्युक्तोत्तरत्वात् । तथाण्वात्ममनसामप्रदेशत्वान्न संयोगः
सम्भबति प्रदेशबतो द्रव्यस्य प्रदेशबता द्रव्यान्तरेण संयोग-
दर्शनात् । कल्पिताः प्रदेशा अण्वात्ममनसां भविष्यन्तीति
चेत् न अबिद्यमानार्थस्य कल्पनायां सर्व्वार्थसिद्धिप्रसङ्गात्
इयानेबाबिद्यमानो बिरुद्धोऽबिरुद्धो बार्थः कल्पनीयो नातोऽधिक-



इति नियमे हेत्वभाबात् कल्पनायाश्च स्वायत्तत्वात् प्रभूतत्व-
सम्भवाच्च । न च वैशेषिकैः कल्पितेभ्यः षड्भ्यः पदार्थेभ्योऽन्ये-
ऽधिकाः शतं सहस्रं बार्था न कल्पितव्या इति निवारको हेतु-
रस्ति तस्माद् यस्मै यस्मै यद्यद्रोचते तत्तत् सिध्येत् । कश्चित्
कृपालुः प्राणिनां दुःखबहुलः संसार एवं माभूदिति कल्पयेत् करतयो-
र्निबारकः स्यात् । किञ्चान्यद्द्वाभ्यां परमाणुभ्यां निरबयबाभ्यां
सावयबस्य द्व्यणुकस्याकाशेनेब संश्लेषानुपपत्तिः । न ह्याकाशस्य
पृथिव्यादीनाञ्च जतुकाष्ठबत् संश्लेषोऽस्ति कार्य्यकारणद्रव्ययो-
राश्रिताश्रयभावेऽन्यथा नोपपद्यत इत्यवश्यं कल्प्यः समबाय इति
चेत् न इतरेतराश्रयत्वात् । कार्य्यकारणयोर्हि भेदसिद्धावाश्रिता-
श्रयभाबसिद्धिराश्रिताश्रयभाबसिद्धौ च तयोर्भेदसिद्धिः कुण्ड-
बदरबदिति इतरेतराश्रयता स्यात् । न हि कार्य्यकारणयोर्भेदः आश्रि-
ताश्रयभावो वा बेदान्तबादिभिरभ्युपगम्यते कारणस्यैब संस्थान-
मात्रं कार्य्यमित्यभ्युपगमात् । किञ्चान्यत् परमाणूनां परिच्छि-
न्नत्वात् सावयवास्ते स्युः साबयवत्वादनित्याश्चेति नित्यत्वनिर-
बयवत्वाभ्युपगमो बाध्येत । यांस्त्वं दिग्भेदभेदिनोऽबयबान्
कल्पयसि त एब मम परमाणब इति चेत् न स्थूलसूक्ष्मतारतम्य-
क्रमेणापरमकारणाद्विनाशोपपत्तेः । यथा पृथिबी द्व्यणुका-
द्यपेक्षया स्थूलतमा बस्तुभूतापि बिनश्यति ततः सूक्ष्मं सूक्ष्म-
तरञ्च पृथिव्येकजातीयकं बिनश्यति ततो द्व्यणुकं तथा परमाण-
बोऽपि पृथिव्येकजातीयकत्वात् बिनश्यन्तोऽप्यबयवबिभागेनैब
बिनश्यन्तीति चेत् नायं दोषः यतो घृतकाठिन्यविलयनवदपि
बिनाशोपपत्तिमवोचाम । यथा हि घृतसुबर्णादीनामबिभाज्य-
मानावयबानामपि अग्निसंयोगात् द्रवभाबापत्त्या काठिन्य-
बिनाशो भबति एवं परमाणूनामपि परमकारणभाबापत्त्या
मूर्त्यादिबिनाशो भबिष्यति तथा कार्य्यारम्भोऽपि नावयव-
संयोगेनैब केबलेन भबति । क्षीरजलादीनां अन्तरेणापि अवयव-

प्रमाण-प्रमेयादिषोडशपदार्थानामुद्देशलक्षणपरीक्षाभिरात्मादिद्वादशविधप्रमेयनिष्कर्षेणात्मसाक्षात्कारात् श्रवण - मनननिदिध्यासनपूर्वकात् सवासनमिथ्याज्ञाननिवृत्तौ तत्कार्याणां रागद्वेषमोहानां निवृत्तिस्ततस्तत्कार्ययोः प्रवृत्तिपूर्वकयोर्धर्माधर्मयोस्ततः पूर्वार्जित - कर्मणां कायव्यूहपूर्वकं भोगेन परिक्षयात् देहान्तरानारम्भस्ततो बाधनालक्षणस्यैकविंशतिविधस्य दुःखस्यात्यन्तिकी निवृत्तिर्भवेत् सैव सुखावाप्तिरिति गौतमः ॥ ८ ॥

वेदोक्तैः शुभकर्मभिर्दुःखहानिः सुखलाभश्चेति जैमिनिः॥९

संयोगान्तरं दधिहिमादिकार्य्यारम्भदर्शनात् तदेवमसारतरतर्कसंदृब्धत्वादीश्वरकारणश्रुतिविरुद्धत्वाच्छ्रुतिप्रवणैश्च शिष्टैर्मन्वादिभिरपरिगृहीतत्वादत्यन्तमेवानपेक्षास्मिन् परमाणुकारणवादे कार्य्यार्य्यैः श्रेयोऽर्थिभिरिति दिक् ॥७॥

अथ नैयायिकमतं दर्शयति—प्रमाणेति - आदिना संशयादेर्ग्रहणम् । तथाच गौतमसूत्रम्—"प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासछलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" ( न्या० सू० अ० १- पा० १-१ ) इत्येतत् । आत्मादिद्वादशविधेति-तथाच गौतमसूत्रम्—"आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्"(न्या० सू० अ० १. पा० १.९, इत्येतत् । एकविंशतीति - शरीरं षडिन्द्रीयाणि षड् विषयाः षड् बुद्धयः सुखं दुःखञ्चेति दुःखमेकविंशतिप्रकारम् । अस्यापि मोक्षे पाषाणकल्प आत्मा निरसनन्तु पूर्ववत् ॥ ८ ॥



सर्वे ह्येते उपायास्तयोरात्यन्तिकयोः सिद्धये नाङ्गीकार्याः परमाचार्येण भगवता श्रीबादरायणेन तत्तन्मतानां निराकृतत्वात् ॥ १० ॥

किन्तु सर्वेश्वराभिख्यस्य पुरुषोत्तमस्य स्वरूपतो गुणतश्च परिज्ञानं स्वज्ञानपूर्वकं तस्यै कल्प्यते ।

तथाहि :—

"ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैः जन्ममृत्युप्रहाणिः । तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल-

अथ जैमिनिमतं दर्शयति—वेदोक्तैरिति - ईश्वरार्चनरूपैर्वैदिकैः कर्मभिः पुण्यादृष्टैः दुःखहानिर्दुरदृष्टक्षतिः सुखस्य स्वर्गस्य मोक्षस्य च प्राप्तिरित्यर्थः । अस्यां पञ्चमत्यां विशेषास्तु तत्तद्ग्रन्थेषु बोध्या ग्रन्थगौरवभयान्न लिखिताः ॥ ९ ॥

एता पञ्चमतीः त्यक्तुमाह—सर्वे हीति । हि निश्चये, तयोः सुखदुःखप्राप्तिपरिहारयोः आत्यन्तिकयोरिति । प्राप्तस्य सुखस्यानिवृत्तिरात्यन्तिकी प्राप्तिः । निवृत्तस्य दुःखस्य पुनरनुत्पत्तिरात्यन्तिकः परिहारः निराकरणप्रकारः पूर्वमेव ज्ञेयः ॥१०

बादरायणमतं दर्शयति—किन्त्विति -"किन्तु कामवितर्कयोरिति" श्रीधरः । वक्ष्यमाणोऽर्थो वाञ्छित इत्यर्थः । तस्यै-तयोरात्यन्तिकयोः सिद्धये । सर्वेश्वरस्य ज्ञानं मोचकमित्युदाहरति ज्ञात्वेति - देवं सर्वाराध्यं सर्वेश्वरं हरिं वेदाज्ज्ञात्वा स्थितस्य मुमुक्षोः सर्वेषां देहदैहिकममतापाशानां हानिश्छेदो भवति । तत्पाशहेतुकैः क्लेशैः क्षीणैर्विशिष्टस्य तस्यप्रार -

मात्तकामः" ॥ "यदात्म-तत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् । अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥" इत्यादिश्रवणात् ॥ ११ ॥

ननु किन्तस्य पुरुषोत्तमस्य स्वरूपं के तस्य गुणाः कीदृशाश्च ते यद्विज्ञानाद्विमुक्तिरिति चेत् । उच्यते—विज्ञानानन्दस्तस्य स्वरूपं "विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्" "आनन्दो ब्रह्मेति व्यजानात्", "रसो वै सः"

---

न्धभोगपूर्त्तेः पुनः पुनर्जायमानस्य जन्ममृत्युप्रहाणिर्भवति । बिडालीदन्तस्पर्शेन तदर्भकस्येव जन्मादिभ्यां तस्य क्लेशो न भवतीत्यर्थः । अथोत्तरोत्तरं एतस्य देवस्याभिध्यानाल्लिङ्गदेहस्य भेदे प्रध्वंसे सति चान्द्रब्राह्मापेक्षया तृतीयं भागवतं पदं स देवज्ञो बिन्दतीति शेषः । तृतीयं तत् कीदृक् बिश्वैश्वर्य्यमनन्तनित्यदिव्यबिभूतिकम्, केबलं प्रकृतिगन्धेनाप्यस्पृष्टम् । ततः स देवज्ञ आप्तकामो भवति । सर्वेश्वरज्ञानं जीवज्ञानपूर्वकं मोचकमित्युदाहरति यदेति । दीपोपमेनात्मतत्त्वेन स्वज्ञानेन युक्तो मुमुक्षुर्यदा ब्रह्मतत्त्वं प्रपश्येद्विचिन्तयेत्तदा "देवं ज्ञात्वा सर्वपाशैर्मुच्यते" इत्यनुषङ्गः । देवं कीदृशं अजं जन्मादिबिकारशून्यम्, ध्रुबमचलम्, पूर्णं सर्वतत्त्वैः प्रधानाद्यैर्बिशिष्टम्, बिशुद्धं तैरस्पृष्टम् ॥ ११ ॥

सर्वेश्वरतत्त्वं पृच्छति-ननु किमिति । "प्रश्नाबधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः । उत्तरयति उच्यत इत्यादिना । रातिरिति - दातुर्यजमानस्य रातिः फलार्पकमित्यर्थः । यदात्मक इति नैरुक्तश्रुतिः स्वयं विमृशति - भगवान् यदात्मकस्तस्य



इत्यादिश्रवणात् । तदेव बिग्रहरूपमिति मन्तव्यम् । न तु स्वरूपाद्विग्रहस्यातिरेकः । यदात्मको भगवांस्तदात्मिका व्यक्तिः । किमात्मको भगवान् ? ज्ञानात्मक ऐश्वर्यात्मकः

---

व्यक्तिमूर्त्तिस्तदात्मिका यो भगबान् सा मूर्त्तिरिति नास्त्यत्र स्बगतभेदोऽपि । 'नेह नानास्ति किञ्चन' 'स्वगतभेदबिबर्जितात्मा' इत्यादिवाक्येभ्यः । बिशेषबलात्तु भेदव्यवहारेण भाव्यमिति भावः । अत्र श्रुतिः पृच्छति—किमात्मक इति । स्वयमुत्तरयति ज्ञानात्मक इत्यादिना । ज्ञानात्मकश्चिदेकधातुः । किं निर्विशेषा चित्तत्राह-ऐश्वर्येति । स्वानुबन्धिषडैश्बर्य इत्यर्थः । षट्सुभागेषु ऐश्वर्यशब्दप्रयोगात् । ऐश्बर्याणि चैतानि तत्र कुतस्तत्राह—शक्त्यात्मकश्चेति । शक्तिरत्र पराख्या, तस्या एब वन्ह्युष्णत्वबत स्वानुबन्धित्वात् । तथा च ज्ञानैश्बर्यपरात्मको भगबानेब मूर्त्तिरिति । इति शब्दो हेतौ, वस्तुन एवंविध्यात् । सर्वज्ञा वयं श्रुतयः भगबन्तमेबाचिन्त्यस्बानुबन्धिशक्त्या वुद्ध्यादिमन्तं लक्षयामहे पश्याम इत्यर्थः । अभिनयेनाह—वुद्धिमानित्यादि । अगूढार्थमन्यत् । हरिवंशेऽपि कृष्णं प्रत्येबमुक्तं दुर्वाससा - "वेदे यत्प्रथितं तेजस्तब चेदं बिभाव्यते । येन बिज्ञानतृप्तास्तु योगिनो वीतकल्मषाः । पश्यन्ति हृत्सरोजे हि तदेवेदं बपुः प्रभो ॥ वेदेर्यत् कीर्त्यते तेजो ब्रह्मेति प्रविभज्य वै । तदेवेदं बिजानेऽहं रुपमीशनमीश्वरेति" ।

एबमात्मबत्वादेब भगबद्विग्रहस्य नित्यत्वमसन्देहमापद्यते तत्र दुर्धियां शङ्कां निराकर्त्तुमाह-तदेबामिति । वैष्णवादीति-बिष्णुपुराणस्य पञ्चमेंऽशे पठ्यते-"चंक्रम्यमाणौ तौ रामं बृक्षमूलकृतासनम् । ददृशाते मुखाच्चास्य निष्क्रामन्तं महोरगम् ॥ निष्क्रम्य स मुखात्तस्य महानागो भुजङ्गमः । प्रययाबर्णवं सिद्धैः स्तूयमानो महोरगैः ॥ गते

शक्त्यात्मकश्चेति । बुद्धिमनोऽङ्गप्रत्यङ्गवत्त्वां भगवतो लक्षयामहे "बुद्धिमान् मनोबानङ्गप्रत्यङ्गवान्" इति, "तमेकं गोबिन्दं सच्चिदानन्दबिग्रहम्" इति "अर्द्धमात्रा-

तस्मिन् स भगवान् संयोज्यात्मानमात्मनि । तत्याज मानुषं देहमतीत्य त्रिविधां गतिम् ॥ अर्जुनोऽपि तदान्विष्य कृष्णरामकलवरे । संस्कारं लम्भयामास तथान्येषामनुक्रमात् ॥ अष्टौ महिष्यः कथिताः रुक्मिणीप्रमुखास्तु याः । उपगुह्य हरेर्देहं बिबिशुस्ता हुताशनम् ॥ रेबती चैव रामस्य देहमाश्लिष्य सत्तम । बिवेश ज्वलितं वह्नि तत्सङ्गादतिशीतलम्" ॥ एबमेब मौषलेयपर्वणि-"ततः शरीरं रामस्य बासुदेबस्य चोभयोः । अन्विष्य दाहयामास पुरुषैराप्तकारिभिः" इति ॥ अर्जुन इति प्रकरणाद् बोध्यम् । श्रीभागवते चैवम्—"ययाऽहरद् भुवो भारं तां तनुं विजहावजः । कण्टकं कण्टकेनेव द्वयं चापीशितुः समम् ॥ यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः । भूभारः क्षपितो येन जहौ तच्च कलेवरम्" इति प्रथमे । "हरिरपि तत्याज आकृतिं त्र्यधीशः" इति तृतीये च । पञ्चमांशवन्मौशलवच्चैकादशेऽप्यन्तिमं चरितमभिहितम् । एवं षोडशराजकीये 'रामं दाशरथिं चैब मृतं शुश्रुम सृञ्जय' इति दाशरथेरपि नारदेन तदुक्तम् । एषु बाक्येषु भगबद्विग्रहस्य विनाशोक्तेरनित्यत्वं प्रस्फुटमिति दुर्धियो बदन्ति । तन्निराकरोति-तत्त्विति । लोके वैराग्याय माययैव तथा भगबता प्रत्यायितं आसुरप्रकृतिभिस्तु तद्यथावदेब गृहीतम् । ऐन्द्रजालिकः खलु स्वरूपेण स्थित एव स्बशिरश्छेदादिकं प्रत्याययन् दृष्टः किमुत महामायी परेशः स इति । कुतस्तत्प्रत्ययनं मायिकमित्यत्र हेतुमाह—राजन्निति । श्रद्दधमाणं हरेर्निर्याणं श्रुत्वा तदेकान्ती परीक्षिदतिखिन्नोऽभूदिति तस्य मायिकत्वं तावदाह-



त्मको रामो ब्रह्मानन्दैकबिग्रहः" इति चैवमादिश्रवणात्, "वेदान्ते प्रथितं तेजः" इत्यादिस्मृतेश्च । इत्थञ्च' सत्यमेव जडं भगवद्वपुः" इति "ज्ञानमेवाचेतनं तत्" इति च प्रत्यु-

हे राजन् तनुभृतो मनुष्यस्येब या जननाप्ययेहा उत्पत्तिमरणरूपा चेष्टा परस्य मया वर्णिता तन्नटस्यैन्द्रजालिकस्येव मायाबिडम्बनमित्यवेहीति । न तच्छ्रुत्वा त्वया खिन्नेन भाव्यमिति भावः । इतः प्राक् च मौशलचरितमेतन्मायिकमेवेत्युक्तं दारुकं प्रति भगवता—"त्वन्तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः । मन्मायारचितामेतां विज्ञायोपशमं ब्रज" इति । आदिना स्कान्दवाक्यञ्च - 'असङ्गश्चाव्ययोऽभेद्योऽनिग्राह्योऽशोष्य एव च । विद्धोऽसृगाचितो बद्ध इति बिष्णुः प्रदृश्यते ॥ असुरान् मोहयन् देवः क्रीडत्येष सुरेष्वपि । मानुषान् मध्यया दृष्ट्या न मुक्तेषु कथञ्चन' इति । 'अबिज्ञाय परं देहमानन्दात्मानमव्ययम् । आरोपयन्ति जनिमत् पञ्चतत्त्वात्मकं जडम्' इति च । नारायणीयवाक्यञ्च— 'एतत्त्वया न बिज्ञेयं रूपवानिति दृश्यते । इच्छन्मुहूर्त्तान्नश्येयमीशोऽहं जगतो गुरुः । माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि' इति । नश्येयमदृश्यः स्यामित्यर्थः । बाराहबाक्यञ्च—"न तस्य प्राकृता मूर्त्तिर्मेदमज्जास्थिसंभवा । न योगित्वादीश्वरत्वात् सत्यरूपोऽच्युतो बिभुः" इति । महायोगित्वादिच्छाकृतं तस्य रूपं न किन्त्वीश्वरत्वान्नित्यमेव तदित्यर्थः । निर्य्याणचरितं मायिकमेवेति स्फुटयितुं तत्र तत्राप्यन्त एवमुक्तम् । तत्र वैष्णवे-"नातिक्रान्तुमलं ब्रह्मंस्तदद्यापि महोदधिः । नित्यं सन्निहितस्त्रत भगबान् केशबो यतः" इति । एकादशे च—

क्तम् । तदेवं भगवद्विग्रहस्यैव ब्रह्मत्वात्तस्य वैष्णवादिवाक्याद्यदन्यथा प्रत्ययनं तत्त्वासुरान् प्रति माययैव-...

"राजन् परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवेहि यथा नटस्य" इत्यादिकादेकादशादिवाक्यादेव ॥ १२ ॥

ज्ञानानन्दविग्रहता तु तस्य श्रुतिमात्रेण गम्या न तु तर्कैः अचिन्त्यालौकिकवस्तुत्वात् । तदिदमभिहितं भगवता सूत्र-

---

"द्वारिकां हरिणा त्यक्तां समुद्रोऽप्लावयत् क्षणात् । वर्जयित्वा महाराज श्रीमद्भगवदालयम् ॥ नित्यं सन्निहितस्तत्र भगवान् मधुसूदनः" इति । राजन्नित्यतः प्राक्स्वतनुमदग्ध्वा तथैव स्वधाम विशतः कृष्णस्य सौदामन्या इव गतिर्देवैर्नालक्षीति तदनन्तरं गुरुपुत्रानयनादेः कथनेन स्वतनुरक्षणे कैमुत्यदर्शनञ्च उद्धवस्त्वेवं स्फुटमाख्यत् । "आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोचनमिति" तृतीये श्रीरघुपतेस्तु निर्य्याणे द्विभुजस्यैव तस्य चतुर्भुजत्वमभूदित्युक्तमुत्तरकाण्डे-"यामिच्छसि महावीर्य तां तनुं प्रविश स्वकाम् । पितामहवचः श्रुत्वा विनिश्चित्य मतिं ततः । विवेश वैष्णवं तेजः सशरीरः सहानुजः" इति ॥ षोडशराजकीयन्तु पुत्रशोकनिवृत्तिफलकप्रपञ्चानित्यत्वनिवेदनफलकमेव तदन्तः पठितं वा दाशरथेस्तत्त्वमसंभवादेवान्तर्धानपरं प्रपञ्चत्यागपरं वा भावीति न किञ्चिदवद्यम् ॥ १२ ॥

ननु ज्ञानानन्दयोर्विग्रहत्वं युक्तिविरुद्धमिति चेदोमित्याह-ज्ञानेति । न तु तर्कैरिति । तर्कधर्मकैरनुमानैरित्यर्थः ! तदिदमिति ज्ञानानन्दविग्रहत्वम् अरूपेति - रूपं विग्रहस्तद्विशिष्टं ब्रह्म नेत्यरूपवदित्युच्यते । कुतः, तस्यैव रूपस्य प्रधानत्वादात्मत्वाद् द्विभुजत्वज्ञानित्वादिधर्मधर्मित्वादित्यर्थः । तस्माद्रूपादभिन्नं



कारेण-"अरूपवदेव हि तत्प्रधानत्वात्" (ब्र. सू. ३-२-१४) "प्रकाशवच्चावैयर्थ्यम्" (ब्र. सू. ३-२-१५) "आह च तन्मात्रम्" (ब्र. सू. ३-२-१६), "दर्शयति चाथो अपि स्मर्य्यते" (ब्र. सू. ३-२-१७) इत्यस्मिन्नधिकरणे तथैव भाषितञ्च ॥१३॥

परमात्मजिज्ञासोस्तु तर्कोऽनुपादेय एव "नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येन सुज्ञानाय प्रेष्ठ" "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्" (म. भा.) इत्यादिश्रुतिस्मृतिभ्यः । ननु मन्तव्य इति तर्काभ्युपगमः,

---

ब्रह्मेति । ननु ध्यातेन विज्ञानानन्देन ब्रह्मणा जडदुःखरूपत्वात्तद्विरुद्धा प्रकृतिर्निवारितैव ज्योतिषैव तिमिरं, तत्र विग्रहत्वं व्यर्थमिति चेत्तत्राह-प्रकाशेति । प्रकाशैकरसे सूर्य्ये यथा ध्यानहेतुत्वाद्विग्रहत्वमव्यर्थं तथा ज्ञानानन्दे ब्रह्मणीति । एवंभावे प्रमाणं दर्शयति - आहेति । तमेवं तन्मात्रम् । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । तं विग्रहमेव यस्मात्परमात्मानमाह श्रुतिः-'सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम् । द्विभुजं मौनमुद्राढ्यं वनमालिनमीश्वरम्' इत्याद्या । इह पुण्डरीकाक्षत्वादिधर्मा विग्रह एवेश्वर इति प्रस्फुटम् । दर्शयतीति 'साक्षात् प्रकृतिपरोऽयमात्मा गोपालः' इति श्रुतिः 'सत्यज्ञानानन्तानन्दमात्रैकरसमूर्तयः' इति स्मृतिश्च परमात्मानं विग्रहं वदति । तस्माद्विग्रहत्वं प्रामाणिकं सूत्राभ्यां व्यतिहारो लब्धः ॥१३॥

परमात्मेति नैषेति, काठके हि प्रेष्ठ नचिकेता । एषा ब्रह्मोपासनयोग्या मतिस्त्वया तर्केण नापनीया न घटनीया । अन्येन वैदिकेन

सत्यं वेदान्तार्थानुगुणोऽसौ न निवार्य्यते। "पूर्वोत्तराविरोधेन कोऽत्रार्थोऽभिमतो भवेत्। इत्याद्यमूहनं तर्कः शुष्कतर्कन्तु बर्जयेदि"त्यादिस्मृतेः। तदेवं विज्ञानानन्दविग्रहानतिरेकि तस्य स्वरूपमिति सिद्धम् ॥१४॥

गुणाश्च सत्यकामत्वसत्यसङ्कल्पत्वादयो ज्ञानानन्दादयश्चानन्ताः, तेऽपि स्वरुपान्नातिरिच्यन्ते "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको बिजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इति। "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः" इति "आनन्दं ब्रह्मणो बिद्वान्" इति चैवमादिश्रवणात्। "यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति। एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति ॥ ब्रह्मणस्तद्गुणानां च भेददर्श्यधमं तमः। भेदाभेदप्रदर्शी तु मध्यमं तु तमो ब्रजेत्" (कठ.उ. २-४-१४) इत्यादिषु गुणातिरेकदर्शिनो विगर्हितत्वश्रवणात्। अतएव "नेह नानास्ति किञ्चन" इति तदन्यत् प्रतिषिद्धम् ॥१५॥

---

गुरुणा प्रोक्तोपदिष्टा सती सुज्ञानाय ब्रह्मानुभवाय भविष्यति। अचिन्त्या इति भारते। नन्विति। असौ तर्कः, पूर्वोत्तरेति कौर्मे ॥१४॥

गुणान् प्रमाणयत्येष इति छान्दोग्ये। बिजिघत्सो वुभुक्षारहितः। गुणानां स्वरूपानतिरेकं प्रमाणयति यथेति काठके। पर्वतेषु वृष्टमुदकं यथा दुर्गे निम्नस्थाने बिधावत्येवं ब्रह्मणो धर्मा-



"ज्ञानशक्तिबलैश्वर्यवीर्य्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" (वि० पु०) इत्यत्र धर्माणामपि धर्मिशब्दवाच्यता स्मृता। "अनन्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद् भृतभूतसर्गः। गुणात्मनस्तेऽपि गुणान् विमातुं हितावतीर्णस्य क ईशिरेऽस्य" (भाग. १०-१४-७) इत्यादिषु च धर्मिणो धर्मानतिरेकः स्मर्यते। एवमभेदेऽपि भेदव्यपदेशो जलकल्लोलवद्द्रष्टव्यः। तदिदमभिहितं भगवता सूत्रकारेण-"उभयव्यपदेशात्त्वहिकुण्डलवत्" (ब्र. सू. ३-२-१८) इत्यस्मिन्नधिकरणे ॥१६

ननु सच्चिदानन्दविग्रहानतिरेकि भगवतः स्वरूपं ज्ञानानन्दादयो गुणाश्च तस्मान्नातिरिच्यन्ते इति स्वरूपतो गुणतश्च निर्भिन्नं तत्त्वमिति नोपयुक्तम्। सच्चिदानन्दशब्दानां

---

स्ततः पृथक् पश्यन् जनस्तान् प्रसिद्धान्नरकानित्यर्थः। ब्रह्मणस्तदिति, अत एवेति, तदन्यत् स्वरूपाद्भिन्नं विग्रहगुणादि प्रतिषिद्धं श्रुत्यैव निबारितम ॥१५॥

गुणगुणिनोर्व्यतिहारमभेदमाह—ज्ञानशक्तीति। षष्ठे व्याख्यास्यते। गुणात्मनस्तेऽपीति श्रीदशमे ब्रह्मवाक्यम्। तदिदं गुणगुणिनोरद्वैतम्। उभयेति-'विज्ञानमानन्दं ब्रह्म' 'यः सर्वज्ञः सर्वबित्' 'आनन्दं ब्रह्मणो विद्वान्' इति द्विविधश्रुतिवचनाद्विज्ञानानन्दरूपं ब्रह्म बिज्ञानानन्दीति मन्तव्यम्। यथा कुण्डलात्मनो अहेः कुण्डलं बिशेषणं तद्वत् ॥१६॥

इह शाब्दिकास्तार्किकाश्च शङ्कन्ते नन्विति। निर्भिन्नमित्य-

प्रवृत्तिनिमित्तभेदेन तद्वाच्यानां सच्चिदानन्दानां भेदस्यावश्यकत्वादिति चेत् मन्दमेतत् । अचिन्त्येऽलौकिकेऽर्थे युक्तेरनवतारात् । परमं तत्त्वं खलु तर्कगोचरं न भवति "नैषा तर्केण" इत्यादिश्रुतिभ्यः, किन्तु श्रुत्येकगम्यमेव तत्, यथाह भगवान् सूत्रकारः "श्रुतेस्तु शब्दमूलत्वात्" (ब्र. सू० २-१-२७) इति ॥१७॥

स्वगतभेदोऽपि तत्र नेत्यभिप्रेत्याह श्रुतिः "नेह नानास्ति किञ्चन" इति । स्मृतिश्च–"निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः । आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मा।"

---

भिन्नमित्यर्थः । 'निर्निश्चयार्थनिषेधयोः' इत्यमरः । सच्चिदानन्दशब्दानामिति -यथा गोघटादिशब्दानां प्रवृत्तिनिमित्तभेदात्तद्वाच्यानां भेदस्तद्वत् । इति चेदिति । 'पक्षान्तरे चेदिति च' इत्यमरः । निरस्यति मन्दमिति । परमं सश्रीकं तत्त्वं परब्रह्म । अत्रार्थे व्याससम्मतिमाह-यथाहेति, श्रुतेस्त्विति, नेत्यनुवर्तते । देहदेहिभावेन गुणगुणिभावेन भातमपि ब्रह्म स्वगतभेदेनापि नोपेतं कुतः ? 'नेह नानस्ति किञ्चन' इति तथैव श्रुतेः । ननु बाधितं श्रुतिः कथं ब्रूयात्तत्राह-शब्देति शब्दमूलत्वात् अचिन्त्यार्थस्य शब्दैकप्रमाणत्वादित्यर्थः । दृष्टं चेदं मन्त्रौषधादिषु ॥१७॥

उक्तं स्वगतभेदाभावं स्फुटयति स्वगतेति, नेहेति, इह परमात्मनि यत्किञ्चन विग्रहादिकमस्ति तन्नाना ततो भिन्नं नास्ति किन्तु तत्स्वरूपानुबन्ध्यस्तीत्यर्थः । 'नानानेकोभयार्थयोः' इत्यमरश्रीधरौ । निर्विशेषत्वे विवक्षिते नेह किञ्चनास्तीति ब्रूयात् ।



(नारदपञ्चरात्र) इति । तथापि वैदूर्यवदचिन्त्येन विशेषमहिम्ना तैः शब्दैर्व्यवहारो विदुषामपि निर्बाधः । न चैवं भेदाभेदौ स्यातां निषेधकवाक्यव्याकोपात् । तस्मादविचिन्त्यत्वमेव शरणमिति सन्तोष्टव्यम् ॥१८॥

विशेषस्त्ववश्यं स्वीकार्यः । स च भेदप्रतिनिधिर्भेदाभावेऽपि भेदकार्यस्य धर्मधर्मिभावव्यवहारस्य सत्यादिशब्दापर्यायतायाश्च निर्वर्त्तकः. इतरथा सत्ता सती भेदो भिन्नः कालः सर्वदाऽस्ति देशः सर्वत्रेत्यबाधितव्यवहारानुपपत्तिः । परेषामप्यावश्यकस्तत्स्वीकारः । इतरथा "विज्ञा-

---

निर्दोषेति नारदपञ्चरात्रे दृष्टम् । मौग्ध्यादिदोषशून्यः सार्वज्ञ्यादिगुणपूर्णो विग्रहो यस्य स परमात्मा । किं मायिनामिव विशुद्धसत्त्वरूपस्तस्य विग्रहस्तत्राह-निश्चेतनेति । चिद्विग्रहश्चिद्गुणकत्वेन विशेषाद्विभात इत्यर्थः । किं सांख्यादीनामिव चिदेकधातुस्तत्राह-आनन्देति, चिदानन्दविग्रह इत्यर्थः । किं त्रिदण्डिनामिव देहिदेहिभेदवान् तत्राह-सर्वत्रेति । देहदेहिभावे गुणगुणिभावेऽपि सति स्वगतभेदेनापि शून्य इत्यर्थः । आम्रो निम्बो नेति स्वजातीयः, आम्रोऽश्मा नेति विजातीयः, आम्रमुकुलमाम्रो नेति स्वगतश्च भेदः । तथापीति-वैदूर्यान्नीलपीतादयो गुणा अभिन्ना एव यथा मिथो भिन्ना व्यवह्रियन्ते तथा सद्रूपाद् ब्रह्मणो विज्ञानानन्दौ सार्वज्ञ्यादयो गुणाश्चाभिन्ना एव भेदेन व्यवह्रियन्ते विशेषादित्यर्थः । निषेधकेति - 'एवं धर्मान् पृथक् पश्यन्'इत्यादिश्रुत्यर्थबाधापत्तेरित्यर्थः ॥१८॥

निर्भेदेऽपि वस्तुनि विशेषबलेन गुणगुणिभावमापाद्य तं

नमानन्दं ब्रह्म" "सत्यं ज्ञानमनन्तं ब्रह्म" (तै.उ.२-१) इत्यादिषु स्वरुपमात्रबोधकानां विज्ञानादिशब्दानां पर्यायतापत्तिः। भ्रमाधिष्ठानत्वादिना चैतन्यस्य सर्वदा भिन्नेऽपि तदभिन्नानन्दादेरिवेदानीमप्रकाशानुपपत्तिश्च । स्वभावस्तु विशेषात्मा ॥१६॥

---

विशेषमन्यान् ग्राहयितुमाह-विशेषस्त्विति । अनिच्छद्भिरपि सर्वैरित्यर्थः। सत्यादिशब्देति, निर्भेदेऽपि ब्रह्मणि विशेषात् सत्यत्वादिगुणभिन्ने भिन्नवाच्यवाचित्वात् सत्यादिशब्दानामपर्यायत्मकत्वं सिध्येत्। एकवाच्यवाचित्वं खलु पर्य्यायत्वम्। ये त्वतद्व्यावृत्त्या सत्यादिशब्दैर्निर्गुणमेकं बस्तु प्राहुः केबलाद्वैतिनस्तन्मते तु तेषां पर्यायता दुर्वारा, एकबाच्यवाचित्वादिति षष्ठे विस्फुटीकरिष्यति । इतरथेति - निर्भेदे बस्तुनि गुणगुणिव्यवहारहेतोर्बिशेषस्यानङ्गीकारे सतीत्यर्थः । सत्ताऽस्तीत्यत्र सत्तायाः सत्ताश्रयत्वं विशेषादेव भासते। घटः पटो न भवतीत्यत्र घटभेदः पटे प्रतीतस्तस्य पटात्मकस्यापि घटभेदवान् पट इति पटाभेदेन प्रतीतिर्बिशेषादेव । कालः सर्वदाऽस्तीति कालस्य कालाधारत्वं देशः सर्वत्रेति देशस्य देशाधारत्वं च तस्मादेवेत्यर्थः। परेषामिति केबलाद्वैतिनाम् । इतरथेति – वैशिष्ट्यापत्तिभयाद् गुणाबभासकं विशेषमस्वीकृत्य शब्दशक्तेरविचिन्त्यत्वाद्विनैव प्रवृत्तिनिभित्तानि विज्ञानादिशब्दैर्बिज्ञानादिस्वरूपे ब्रह्मणि निगदिते सतीत्यर्थः। दोषान्तरमाह-भ्रमाधिष्ठानेति। रजतभ्रमे यथा तदधिष्ठानस्य शुक्तेरस्ति साक्षात्कारस्तथा प्रपञ्चभ्रमे तदधिष्ठानस्य चैतन्यस्य सोऽस्ति । चैतन्यवत्तदभिन्नस्यानन्दादेरिदानीं व्यवहारदशायां यदप्रकाशस्तत्र चैतन्यनिष्ठो विशेष एव हेतुः, तदस्वी-



न च विज्ञानत्वादिधर्मविशिष्टाभिधायिभिर्विज्ञानादिशब्दैर्विशिष्टमभिधेयं शुद्धमखण्डं तु लक्ष्यमिति वाच्यम्। सर्वशब्दानभिधेयस्य तस्य लक्ष्यत्वायोगात् । तथापि तत्त्वमसीत्यत्र शोधितात् पदार्थाद् वाक्यार्थस्यैक्यस्य भेदो भेदाभेदो वा तव नाभिमतः। तथा सत्यैक्यस्य मिथ्यात्वाद्यापत्तेः तत्र चेद्विशेषा न स्यात्तर्हि कथं स्वप्रकाशचित्प्रकाशेऽप्यैक्यस्याप्रकाशः। चित्प्रकाशस्य भेदभ्रमविरोधित्वेऽपि तदभिन्नैकप्रकाशस्य तद्विरोधश्चेति तस्मादवश्याभ्युपेयो विशेषः ॥२०॥

---

कारे चैतन्यमिवानन्दोऽपि प्रकाशेतेत्यर्थः। ननु सत्तादीनां सत्ताद्यन्तराभावेऽपि बस्तुस्वभावादेव सतीत्यादिव्यवहारः स्यात् किं बिशेषेणेति चेत्तत्राह-स्वभावस्त्विति स स्वभाव एवास्माभिर्विशेषशब्देनोच्यत इत्यर्थः । तस्मादलं नाममात्रविरोधेनेति ॥१६॥

सर्वशब्दावाच्ये लक्षणाया असम्भवात्तत्त्वमस्यादिबाक्यानां बिनैवाचिन्त्यशक्त्या निर्विशेषं चैतन्यं बोध्यमिति नव्यमतम्। पर्यायतापत्त्या दूषयित्वा विशेषो ग्राहितः। अथ लक्षणावादिनं प्राञ्चं दूषयन् विधान्तरेण तं ग्राहयति न चेत्यादिना । बिज्ञानादिशब्दानां मिथोभिन्नबिज्ञानत्वादिधर्मबाचित्वान्न पर्यायता । धर्मान् विहाय स्वरूपमात्रे लक्ष्ये का नः क्षतिरित्येवं न बाच्यमित्यर्थः। तत्र हेतुः-सर्बशब्देति। त्वन्मते सर्बशब्दाबाच्यं ब्रह्म 'यतो बाचो निवर्त्तन्ते' इत्यादिबचनात्। तत्र कथं लक्षणा । सोऽयं देबदत्त इत्यादौ बाच्यमेव पिण्डमात्रं लक्ष्यं दृष्टमिति भाबः । दूषणान्तरमर्पयितुमाह-तथापीति । सर्वशब्दावाच्ये

**स च वस्त्वभिन्नः स्वनिर्वाहकश्चेति नानावस्था । तस्य तथात्वञ्च धर्मिग्राहकप्रमाणसिद्धम् ॥२१॥**

---

ब्रह्मणि लक्षणायामविरुद्धायामविरुद्धायां स्वीकृतायामीत्यर्थः । शोधिताद्विहीनसर्वज्ञत्वाल्पज्ञत्वादिगुणकादित्यर्थः । तथा सतीति-शोधितात् पदार्थाद्वाक्यार्थस्यैक्यस्य भेदे भेदाभेदे बाऽनभिमते सतीत्यर्थः । मिथ्यात्वाद्यापत्तेरिति-ब्रह्मभिन्नं सर्वं तत्राध्यस्तत्वान्मिथ्येति त्वत्सिद्धान्तादित्यर्थः । तत्र चेदिति—तत्रैकस्मिन् शुद्धे ब्रह्मणि चित्प्रकाशस्येति सत्यपि चित्प्रकाशे भेदभ्रमो न निवर्त्ततेऽतः स न तद्विरोधी, ऐक्यप्रकाशे जाते भेदभ्रमो विनिवर्ततेऽतः स तद्विरोधीति निर्भेदेऽपि तत्त्वे भेदकार्यं बदतस्ते बिशेषो गले निपतित इति भावः । तस्मादिति । नाप्यनुमेय एव विशेषः । 'अव्यक्तबुद्ध्यहङ्कारमनोभूतेन्द्रियाणि च । तन्मात्राणि बिशेषश्च तस्मै तत्त्वात्मने नमः' इति भारते भीष्मस्तवराजबचनेनापि सिद्धेः ॥२०॥

ननु विज्ञानानन्दे स्वरूपे विज्ञातृत्वादिगुणभानं विशेषादित्युक्तम् । अथ तस्मिन् विशेषभानं कस्मादित्यत्र बिशेषान्तरादिति चेदनवस्थेति केवलाद्वैतिभिराक्षिप्तो ब्रवीति-स चेति, तस्येति, विशेषस्य तथात्वं बस्त्वभिन्नत्वं स्वनिर्वाहकत्वं च केन प्रमाणेनावगतमिति चेत्तत्राह-धर्मिग्राहकेति । येनैवंधर्मीनित्यादिश्रुत्याऽर्थापत्त्या वा प्रमाणेन निर्भेदेऽपि बस्तुनि गुणगुणिभावोज्जृम्भको विशेषो धर्मो गृह्यते तेनैव तस्य वस्त्वभिन्नत्वं च इतरथानवस्थापत्तेः । तथैव स्वनिर्वाहकत्वं च स्वस्य तद्भावोज्जृम्भकमचिन्त्यत्वं च तेनैव गृह्यते । अचिन्त्यत्वं बिना निर्भेदे वस्तुन्युभयोज्जृम्भणासंभवादित्यर्थः । यथा न्यायनये पृथिव्यर्णवादिरूपं जगदीश्वरकर्तृकं जीबाशक्यरचनत्वे सति कार्य्यत्वादित्यनु



**ननु जीवत्वेश्वरत्वादिव्यवहारोऽपि विशेषादेवास्तु मैवम् । यत्र भेदाभावो भेदकार्ये च प्रमिते तत्रैव भेदप्रतिनिधिविशेषः कल्प्यते न तु प्रमितभेदेषु प्रकृतिजीवेशेषु । न हि सोमवल्लीलाभे पूतिकस्तत्प्रतिनिधिः कल्पनीयः, तस्मान्निर्भेदेऽपि तत्त्वे भेदव्यवहारो विशेषबलादिति सिद्धम् ॥२२**

**अत्राहुः—बिग्रहो गुणाश्च स्वरूपादतिरिच्यन्ते इतरथा "यदात्मको भगवांस्तदात्मिका व्यक्तिः" "आनन्दं ब्रह्मणो बिद्वान्" (तै. उप. २-६-१) इत्यादिश्रुतेः, "मम देहे गुडाकेश" (गी०) "हरेर्गुणाक्षिप्तमतिः" इत्यादिस्मृतेश्च स्वारस्यभङ्गः । न च बिग्रहादेरपि ज्ञानादिरूपत्वं निष्प्रयोजनं प्रमाणेन प्रयोजनमुखानिरीक्षणात् ॥२३॥**

---

मानेन जगतः कर्तृतया सिध्यन् धर्मीश्वरस्तेनैव स्वकर्तृत्वनिर्वाहकान् ज्ञानेच्छाप्रयत्नानादायैव सिध्यति तद्वतामेव लोके कर्तृत्ववीक्षणादिति धर्मिग्राहकेणानुमानेन तज्ज्ञानादि गृहीतं तद्वत् जगतः कार्यत्वं तु सावयवत्वात् सर्वसंमतम् ॥२१॥

बिशेषाङ्गीकारात्परिहृष्टाः स्वाभेदश्रद्धाजाड्यभाजः केचिद्पूर्ववैष्णवाः प्राहुः-नन्विति । तान् प्रत्याख्याति मैवमिति । प्रमितभेदेष्विति, "ज्ञाज्ञौ द्वावजावीशानीशावजा ह्येका भोक्तृभोगार्थयुक्ता" (श्वे० उप १-६) "भोक्ता भोग्यं प्रेरितारं च मत्वा" (श्वे. उ. १-१०)" इत्यादिश्रुतिभिर्भोग्यत्वभोक्तृत्वनियन्तृत्वैः प्रमाणितमिथोऽन्यत्वेष्वित्यर्थः ॥२२॥

अत्रेति-अत्र भगवद्वस्तुनिरूपणे त्रिदण्डिनो वदन्तीत्यर्थः ।

विशेष्येण स्वरूपेण सह तस्य सम्बन्धो नित्योऽपृथक्सिद्धविशेषणत्वात् । नित्यसम्बन्धापेक्षीण्येव स्वरूपानतिरेकित्वबचांसि ॥२४॥

न च बिशेष्यबिशेषणयोर्ज्ञानादिरूपत्वे नित्यसम्वन्धे च स्वीकृते भेदानुपपत्तिर्विशेष्यत्वबिशेषणत्वाभ्यां तयोर्भेदात् । एकं ज्ञानादिमत् परन्तु ज्ञानादिरूपमिति, इतरथा जीवेशयोरभेदापत्तिः ॥२५॥

---

इरत्तथा बिग्रहादेरतिरेकास्वीकारे । यदिति । चिदात्मको भगवान् चिदात्मिका तस्य मूर्तिरित्युभयोश्चित्त्वे सादृश्यमेव न त्वभेदः । एतदुपोद्बलकं च–'मम देहे गुडाकेश' इत्यादि । यदात्मको घटः तदात्मकः करक इतिबत् । तत्र किमात्मक इति पृष्ट्वा स्वयमुत्तारयति-ज्ञानेत्यादि । विशेष्यभूतो धर्म्मी ज्ञानात्मकः । ऐश्वर्यशक्त्योरपृथक्सिद्धधर्मत्वात्तादात्मकश्च स इत्यर्थः । अन्यथा षष्ठीश्रवणं व्याकुप्येत । इतिशब्दो हतौ । यस्मात् स ऐश्वर्यशक्तिभ्यां तादृग्भ्यां नित्योपेतस्तस्मादनादितत्तांसिद्धानि तस्मात् पृथक्सिद्धानि बुद्ध्यादीनि विशेषणानि बयं लक्षयामहे इत्यर्थः । न चेति । आत्मना ज्ञानादिरूपत्वेन प्रकाशतादिफले सिद्धे बिग्रहादेस्तत्त्वबर्णनं निष्फलमिति न बाच्यम्, बिशुद्धसत्त्वरूपत्वन्तु युक्तं वक्तुमिति भावः । प्रमाणेनेति प्रमाणं हि बस्तुनः स्वभावमपेक्ष्य तत्र प्रबर्तते न तु फलमपेक्ष्येत्यर्थः ॥२३॥

न च बिग्रहादेर्भिन्नत्वात् कदाचित् स्वरूपाद्वियोगः स्यादस्मद्विग्रहादिर्वदिति चेत्तात्राह–बिशेष्येणेति । ननु विग्रहादेर्भेदे तदभेदबोधकानि 'नेह नानास्ति किञ्चन' 'अनन्तकल्याणगुणात्मकोऽसौ' इत्यादिबचांसि कथं सङ्गतानि तत्राहनित्येति ॥२४॥



"यथोदकं दुर्गे वृष्टम्" (कट० उप० ४-१४) इत्याद्या श्रुतिस्तु पृथक्सिद्धवादिनं निन्दति । तस्मात् स्वरूपाद्विग्रहस्य गुणानां च भेद एवेति ॥२६॥

नैतदतिचारु, यदित्यादिश्रुतिस्मृतिस्वारस्यभङ्गात् । "श्रुतेस्तु शब्दमूलत्वात्" (ब्र० सू० २-१-२७) इति हि नः स्थितिरिति ॥२७॥

---

स्वरूपरूपयोर्भेदकान् धर्मान् बक्तुमाह-न चेति । यथा नारायणस्य परस्य वासुदेबादेश्च व्यूहस्य ज्ञानादिरूपत्वान्नित्यसम्बन्धाच्चाभेदस्तथा नारायणस्य तद्विग्रहादेश्च भेदो माभूत् उक्तहेतोरिति न बाच्यमित्यर्थः । तत्र हेतुर्विशेष्यत्वेति । एकं विशेष्यं भगवद्वस्तु परं विशेषणं तद्विग्रहादिबस्तु । पूर्वं चेतनं परन्तु चैतन्यमित्यर्थः । परव्यूहयोस्तु न विशेष्यविशेषणभावोऽस्ति परस्यैव व्यूहात्मनावस्थितेरिति न किञ्चिदवद्यम् । इतरथेति ज्ञानादिरूपत्वान्नित्यसम्बन्धाच्च भेदास्वीकारे सतीत्यर्थः । तथा च जीवेशभेदबोधकानि 'द्वा सुपर्णा' (श्वे० उ० ४–६) इत्यादिबाक्यानि व्याकुप्येयुः ॥२५॥

ननु गुणभेदवादिनां तदभेदबोधिका श्रुतिः कथं सङ्गता तत्राह–यथोदकमिति । न ह्येषा श्रुतिः गुणान् ब्रह्माभिन्नानाह किन्तु ये तान् पृथक्सिद्धान् प्रकृतिगतान् वदन्ति तान् गर्हयतीत्यर्थः । बिज्ञातृत्वादयो गुणाः प्रकृतेरेव न तु पुंसः किन्तु प्रकृतिसंसर्गात्तो पुंसि भवन्ति जपापुष्पारूण्यमिव स्फाटिके इति साङ्ख्याः ॥२६॥

निरस्यति-नैतदिति । अत्र हेतुर्यदिति । यो नारायणः परः स बासुदेवो व्यूह इतिवत् ! यो भगवान् सा व्यक्तिरिति श्रुतेः-

सगुणादिवाक्यानां गुणानुवादित्वेन गुणविधाने तात्पर्य्याभावान्निर्गुणं चैतन्यमेव पारमार्थिकं न तु सगुणं ब्रह्मेति दुरुक्तिस्तूपरिष्टान्निराकरिष्यते ॥२८॥

तथा च विग्रहादेः स्वरूपानतिरेकेऽपि विशेषादेव भेदव्यवहारः। प्रवृत्तिनिमित्तभेदादर्थभेदस्तु लौकिकोऽस्माभिः स्वीकृतः। न त्वलौकिके श्रुतिमात्रगोचरे परस्मिंस्तत्त्वे स स्वीकर्त्तुं शक्यते ॥२९॥

तदेवं तथाभूतस्य भगवतो ज्ञानादेवास्य जीवस्य तयोरात्यन्तिकयोः सिद्धिर्न त्वन्यस्मादिति सिद्ध्यति, "तमेव

---

ऋज्वर्थः प्रतीयते। अत एव अनन्तकल्याणेत्यादिस्मृतेश्च गुणाभिन्नः परमात्मेत्यार्जवेनार्थोऽवगम्यते तस्य भङ्गः स्याद्यदि कष्टकल्पना तत्र विधेयेत्यर्थः। किञ्चात्मनिष्ठे बुद्धिमनसी विग्रहनिष्ठे त्वङ्गप्रत्यङ्गे प्रसिद्धे तेषां सर्वेषामिहात्मनिष्ठता श्रूयमाणा तयोरैक्ये समञ्जसाभाविनीति। श्रुतेस्त्विति। ज्ञानं क्षणिकमिति बौद्धाः, ज्ञानं निराकारमिति मायिनः संगिरन्ते। तस्य श्रुतिबलादेव नित्यत्वं साकारत्वं च यूयं ब्रूथेति भावः ॥२७॥

केवलाद्वैतिनः शङ्कामवहेलयन्नाह—सगुणेति। गुणा विग्रहो धर्मश्च। तद्विशिष्टब्रह्मवादिनामित्यर्थः। उपरिष्टाच्चतुर्थे पादे ॥२८॥

प्रकरणमुपसंहरति-तथा चेति। लौकिक इति। ब्राह्मणः श्यामः पाचको डित्थ इति व्याकरणादिशास्त्रोक्त इत्यर्थः। न त्वलौकिक इति व्याकरणादिव्युत्पत्तिकूपाम्बुनो वेदान्तव्युत्पत्तिसुधोदधेर्न स्यादुपकृतिरितिभावः। सप्रवृत्तिनिमित्त भेदादर्थभेदः, प्रवृत्तिनिमित्ताप्रवृत्तिनिमित्त भेदस्तु विशेषबलादिति बोध्यम् ॥२९॥



विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यते अयनाय" (श्वेता० उ०३-८) इति श्रवणात्, "विद्यैव तु तन्निर्धारणात्" (ब्र० सू० ३-३-४७) इति न्यायाच्च, "प्लवा ह्येते अदृढा यज्ञरूपाः" (मुण्ड० उ० १-२-७) "नास्त्यकृतः कृतेन" (मुण्ड० उ० १-१-१२) "न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः" (महानारायण उ० १०) "यथा दृढैः कर्ममयैः क्रतुभिर्मामानोनिभैः" (भाग० १०) "विद्यामान्वीक्षिकीं हित्वा तं प्रति भवार्णवम्" इत्यादिश्रुतिस्मृतिभ्यः ॥३०॥

---

मुख्यं प्रकरणमुपसंहरति—तदेवमिति। तयोः सुखप्राप्तिदुःखपरिहारयोः, अन्यस्मात् कर्मतः। तमिति पुरुषसूक्ते – तं परेशं विदित्वा ज्ञात्वोपास्य च अतिमृत्युं मोक्षं तद्वेदनादन्यः पन्था उपायो अयनाय मोक्षप्राप्तये न विद्यते। यलोपश्छान्दसः, विद्यैवेति ब्रह्मसूत्रम। विद्यैव ज्ञानपूर्विकोपासनैव मोक्षहेतुः। कुतः तमेवेत्यादिश्रुतौ तस्यास्तद्धेतुत्वविनिश्चयादित्यर्थः। न त्वन्यस्मादित्येतत् समर्थयन् प्राह—प्लवा इति मुण्डके, अदृढा जीर्णाः। नास्त्यकृत इति - अकृतो भगवल्लोकः कृतेन कर्मणा नास्ति न सिध्यति। साध्यसाधनयोस्तयोर्वैरूप्यादित्यर्थः। किन्तु विद्ययैव सिध्यति। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदिति वाक्यशेषात्। न कर्मणेति तैत्तिरीयारण्यके। एके विरक्तास्त्यागेन विरागपूर्वकेण विज्ञानेनेत्यर्थः। यथा दृढैरिति श्रीदशमे शुकवाक्यम्। आन्वीक्षिकी आत्मविद्या ताम्। तथा च कर्मैवस्वर्गमोक्षहेतुर्विद्या तु तस्य द्वारमिति जैमिनिमतं निरस्तम् ॥३०॥

स्यादेतत् "योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया । ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचित्" (गीतायां) इति भगवता त्रिकं निःश्रेयसहेतुरित्युक्तम् । विद्यैव तद्धेतुरिति कथमिति चेत् उच्यते कर्मणः साक्षात्तद्धेतुत्वं नास्ति पूर्वोक्तश्रुत्यादिभ्यः किन्तु चित्तशुद्धिद्वारा तदुभयाङ्गतैव "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" (बृ. उ. ४-४-२२) इत्यादिश्रुतेः । "यदेच्छावासनिरताः सर्वबाधाविवर्जिताः । शुद्धान्तःकरणाः शुद्धाः कर्मानुष्ठाननिर्मलाः ॥ शुद्धे च तासां मनसि शुद्धेऽन्तः संस्थिते हरौ । शुद्धज्ञानं प्रपश्यन्ति विष्णवाख्यं येन तत्पदम्" इत्यादिस्मृतेश्च । किन्तु ज्ञानभक्त्योरेव साक्षात्तद्धेतुत्वम् ॥३१॥

स्यादिति । ज्ञानस्यैव तदुभयहेतुत्वं यत्त्वयोक्तं तदेतत् स्याद्यदि मदुक्तं नोपपद्येतेति शेषः। त्वया किमुच्यते इति चेत्तत्र वक्तव्यमाह—योगा इत्येकादशे। विद्यैवेति। ज्ञानमेवेत्यर्थः। उच्यत इति तदुभयाङ्गता ज्ञानभक्तिपोषकतेत्यर्थः। तमिति - बृहदारण्यके तं जीवांशिनमीश्वरं वेदानुवचनेन स्वाध्यायपठनेन ब्रह्मचारिणः यज्ञेन दानेन च गृहिणः तपसा वर्णिनः, अनाशकेन यतयः। यथेति श्रीवैष्णवे। ब्रह्मणा सृष्टाः प्रजा इति बोध्यम्। तासां प्रजानां येन शुद्धेन ज्ञानेन विष्णवाख्यं पदं वस्तु लभ्यं भवतीति । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इति नानार्थवर्गः। साक्षात्तद्धेतुत्वमव्यवधानेन मोक्षकारणत्वमित्यर्थः ॥३१॥



भक्तिरपि ज्ञानविशेषो भवतीति ज्ञानत्वसामान्यात्तमेवेति विद्यैवेति व्यपदेशः । जातिं पुरस्कृत्य बहुष्वैक्यं व्यपदिश्यते । यदाह भरतः-"रसादीनामनन्तत्वाद् भेद एको हि गण्यते" इति । विवृतं चैतत्-असंलक्ष्यक्रमत्वं जातिमादाय रसादिरेक एव गण्यते । अन्यथा तद्गणनमशक्यं प्रत्येकं भेदबाहुल्यादिति । ज्ञानविशेषे भक्तिशब्दस्य प्रयोगः कौरवविशेषे पाण्डवशब्दवद् बोध्यः ॥३२॥

अयमत्र निष्कर्षः । विद्यावेदनपर्यायं ज्ञानं द्विविधम्, एकं निर्निमेषवीक्षणवत्तत्त्वंपदार्थानुभवरूपं, द्वितीयं त्वपा-

ननु भगवद्वाक्याज्ज्ञानभक्त्योरुभयोस्तद्धेतुता प्रतीता न तु श्रुतौ सूत्रे च तत्राह—भक्तिरपीति स्फुटार्थम् । बहुष्वित्युभयोरुपलक्षणम् । विवृतमिति - साहित्यकौमुद्यामिति बोध्यम् । तद्गणनं रसादिसंख्याकरणम् ॥३२॥

ज्ञानस्य द्वैविध्यं विशदयति - अयमत्रेति । तत्र शुद्धेति । पञ्चाग्निविदः खलु जीवस्वरूपं विज्ञानविज्ञातृपरेशांशमनुसन्दधते। तत्र सानुसंधावपि परेशानुसन्धिरस्तीति तमेवेत्यादिश्रुतिसूत्राभ्यां सहाविरोधः। दृष्टान्तादप्येवं लब्धं-त्यक्तायाः पत्न्याः पतिज्ञानमस्त्येव । कैवल्येति । विशुद्धः सन् तल्लोके तिष्ठतीति नास्यलोकाध्यक्षतेति भावः। आत्मानमिति बृहदारण्यके। पुरुषो जीवश्चेदात्मानं स्वं विजानीयात्, कथम् अयं विज्ञानविज्ञातृवपुः परेशांशोऽस्मदर्थो भवामीति विद्यात्तदास्य सिद्धः पुमर्थः । अथायं किं वस्त्विच्छन् कस्य कामाय वाञ्छनीयाय शरीरमनुसंज्वरेन्निरन्तरं संतापयेत् । तावता ज्ञानेनायं निर्दुःखः स्यात् ।

ङ्क्वीक्षणवद्विचित्रं भक्तिरूपमिति । तत्र शुद्धत्वंपदार्थानुसन्धिनाऽस्य जीवस्य तत्पदभाजोऽपि पतित्यक्तपत्नीवद् भगवत्प्रसादसौभाग्यहीनस्य कैवल्यलक्षणो मोक्षः स्यात् "आत्मानं चेद्विजानीयादयमस्मीत पुरुषः। किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्" इत्यादिश्रुतेः ॥३३॥

तत्पदार्थपरिशुद्धिविज्ञानात्त्वमात्यसैन्याधिपादिवद्यथायथं तत्प्रसादसौभाग्यभाजनस्य तस्य सालोक्यादिलक्षणा मुक्तिर्भवति । "एतद्वै सत्यकाम परं चापरं ब्रह्म यदोङ्कारः" इत्युपक्रम्य "यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्य्ये सम्पन्नो यथा पादोदर-

---

साक्षात्कृततादृगात्मनोऽनस्य काचिद्वाञ्छा। यस्त्वस्यांशी परेशः सोऽपि पूर्ण एवेति न किंचित् कार्यमस्ति। 'कामः स्मरेच्छयोः काम्ये' इति श्रीधरः ॥३३॥

तत्पदार्थेति चिदेकरूपरेशानुभवादित्यर्थः। सालोक्यादीति-लोकाध्यक्षत्वसारूप्यसामीप्यसार्ष्टिलक्षणेत्यर्थः। एतद्वै षट्प्रश्न्यां पिप्पलादस्य महर्षेर्वाक्यम। हे सत्यकाम! परं नारायणाख्यं अपरं बिरिञ्चाख्यं यद् ब्रह्म तस्यैतदेव योऽयमोङ्कार इति। ॐकारस्य परब्रह्मत्वं हंसादिवदक्षररूपतदवतारत्वात्। अपरब्रह्मत्वं अपरस्य परकार्यत्वात् । तस्मादोङ्कारं ब्रह्मद्वयात्मकं जानन् विद्वान् एतेनोङ्कारेण ध्यातेन परापरयोर्ब्रह्मणोरेकतरं मत्वेति यथाध्यानं लभते पादोदरः सर्पः, जीवघनात् सर्वजीवाभिमानिनो बिरिञ्चात्परं पुरि परमे व्योम्नि शयं स्थितं



स्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नियते ब्रह्मलोकं स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते" इति श्रवणात्। शास्त्रीयज्ञानं त्वत्र परत्र च द्वारभूतं स्वीकार्यम्, इतरथा प्रवृत्त्यनुपपत्तेः ॥३४॥

भक्तिरूपेण तु ज्ञानविशेषेण स्नेहसौन्दर्यादिगुणाश्रितयुवतिरत्नवद् भगवद्वशीकारप्रसादपात्रस्य तदङ्घ्रिवरिवस्यानन्दलक्षणः पुरुषार्थो भवति "भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसी" इति "विज्ञानघनानन्दघना सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति" इति च

---

नारायणमीक्षते प्राप्नोतीति। अस्य परेशध्यायित्वात्तत्प्रसादाल्लोकाध्यक्षत्वादिकं भवतीति गम्यते। शास्त्रीयं ज्ञानं त्विति। अत्र तत्त्वंपदार्थानुभवरूपे परत्र च भक्तिरूपे विज्ञाने इत्यर्थः। इतरथा शास्त्रीयं ज्ञानं विना तत्र तत्र प्रवृत्तिर्न स्यात् ॥३४॥

भक्तिरूपेणेति - निष्कामभक्तिरूपेणेति बोध्यम् । वरिवस्या परिचर्य्या। 'वरिवस्या तु शुश्रूषा परिचर्याप्युपासना' इत्यमरः। भक्तिरेवेति तापनीश्रुतिः, एनं भक्तं नयति तद्धाम प्रापयति दर्शयति धामिनं हरिं, कुत एवं तत्राह---यतः पुरुषो हरिर्भक्तिवशः, कुतस्तद्वश्यत्वं तस्य तत्राह—भक्तिरेवेति । भूयसी सर्वतत्प्राप्तिसाधनेभ्यो बहुतरा श्रेष्ठेत्यर्थः। भक्तेः स्वरूपं निर्दिशन् पुरुषस्य तस्य तद्वश्यतामाह—विज्ञानेति, श्रीगोपालतापन्यां कृष्णस्य तादृशी मूर्तिः । भक्तियोगेति, तद्वश्यास्तीत्यर्थः । कीदृशी सेत्याह—विज्ञानघना मूर्तविज्ञानरूपा आनन्दघना मूर्तानन्दरूपा। मूर्त्तौ घन इति पाणिनिसूत्रम्। मूर्त्तौ काठि-

श्रुतेः, “अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विजः । साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥ मयि निर्बद्धहृदयाः साधवः समदर्शिनः । वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा” इत्यादिस्मृतेश्च ॥३५॥

सालोक्यादेस्तु नेहाभिलाषः स्वतः संभवात् “मत्सेवया प्रतीतं ते सालोक्यादिचतुष्टयम् । नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतम्” इति स्मृतेः । भक्तिलक्षणेऽप्येवं पठ्यते—“भक्तिरस्य भजनं तदिहामुत्रोपा-

~~~~~~~~~~~~~~~~~~~~

न्येऽर्थे अन्तेरप स्याद्घनश्चादेश इति सूत्रार्थः । सैन्धवघनो दधिघनमिति तदुदाहरणम् । भक्तियोगे कीदृशीत्याह—सच्चिदानन्दैकरसे इति ह्लादिन्यादिसारे इत्यर्थः । अहमिति नवमे भगवद्वाक्यम् । अस्वतन्त्रो जीवो यथा परस्योत्कृष्टस्याधीनस्तथा परेशोऽप्यहं भक्ताधीन इत्यर्थः । भक्ताधीनता मे सुखायैवेति दृष्टान्तेनाह—सत् स्त्रिय इति ॥३५॥

अस्या भक्तेर्निष्कामतां दर्शयति—सालोक्यादेरिति । इह निष्कामभक्तिरूपे ज्ञाने । स्वत इति, भोजनेनेव तृप्तेरिति भावः । अत्र प्रमाणं हेतुत्वेनाह—मदिति - नवमे श्रीभगवद्वाक्यम् । इह पूर्वा सेवा साधनभक्तिः परा तु प्रेमभक्तिरिति बोध्यम् । प्रतीतमनुषङ्गलब्धम, अन्यत् स्वर्गसुखम । नन्वेषां सालोक्याद्यनिच्छा न युक्ता तस्याप्राकृतत्वेनैश्वर्यत्वात् सत्यं सालोक्यादिस्वभावजं सुखैश्वर्यं नेच्छन्ति सेवाविरोधित्वात्, तदविरोधि चेदिच्छन्त्येव । सेवानुपेतं तत् सुखरूपं सेवोपहन्तृपरमसुखरूपं सेव्यस्य तद्रूपत्वादिति । स्वार्थनिपुणत्वमेषामुक्तम् ।

३५ ) सिद्धान्तरत्नम् [ पाद १

धिनैरास्येनामुष्मिन् मनःकल्पनमेतदेव नैष्कर्म्यम्” इत्यथर्वशिरसि, “सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम् । हृषीकेण हृषीकेशसेवनं भक्तिरुत्तमा” इति नारदपञ्चरात्रे च ॥३६॥

एवं च “यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः

~~~~~~~~~~~~~~~~~~~~

“आराधनं भगवत ईहमाना निराशिषः । ये तु नेच्छन्त्यपि परं ते स्वार्थकुशलाः स्मृताः” ॥ इति शक्रेण । एवमहैतुक्यव्यवहितेत्यादौ बोध्यम् । एषां भक्तिरकिञ्चनेति तदनुष्ठातृमुखेन पौराणिकैरुच्यते—“न येषां भजनादन्यच्चिकीर्षितमभीप्सितम् । जिज्ञासितं च किञ्चिन्न ज्ञेया निष्किञ्चना बुधैः” इति । भक्तिरस्येति गोपालतापन्याम् । अस्य कृष्णस्य भक्तिरानुकूल्येन श्रवणादिभजनम्, अस्मै रोचमाना प्रवृत्तिरानुकूल्यं तथामुष्मिन् कृष्णे मनः कल्पनं च तत् मनः कल्प्यते निवेश्यतेऽनेनेति निरुक्तेश्चित्तानुरञ्जनात्मकः श्रवणादिहेतुको भाव इत्यर्थः । उत्तमात्वसिद्धये—तदिहेति । इहलोके परलोके चोपाधेः कृष्णान्यफलेच्छाया नैरास्येन विरहेण कृष्णैकस्पृहया जायमानमित्यर्थः । एतदेव नैष्कर्म्यं नित्यनैमित्तिकादिकर्मनावृतम् । स्वार्थे ष्यञ् । एवशब्दः सकामाया भक्तेर्व्यावृत्तये । यद्वा, अनुषङ्गेन कर्मरूपाविद्यानिवर्तकम् । आयुर्घृतमितिवत् प्रयोगः । सर्वेति - सर्वैरुपाधिभिर्हृषीकेशान्याभिलाषैर्निर्मुक्तम्, निर्मलं कर्मयोगाद्यनाविलं तत्परत्वेनानुकूल्येन विशिष्टम्, हृषीकेशस्य कृष्णस्य हृषीकेण श्रोत्रादीन्द्रियेण सेवनं कायिकं वाचिकं मानसिकं च परिशीलनमित्यर्थः ॥३६

एवञ्चेति-तत्त्वंपदार्थानुसन्धिरूपादितया श्रवणादिभक्तितत्-

प्रेत्य भवति," "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" "नायं सुखापो भगवान् देहिनां गोपिकासुतः । ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह" इत्यादिनि फलतारतम्यवाक्यानि सङ्गच्छेरन्निति ॥३७॥

अत्रैवं पुनश्चिन्त्यते भगवद्वशीकारहेतुभूता भक्तिः किंस्वरूपेति-किं प्राकृतसत्त्वमयज्ञानानन्दरूपा किं वा भगवत्स्वरूपज्ञानानन्दरूपा अथवा जैवज्ञानानन्द-रूपा उत ह्लादिनीसारसमवेतसम्बित्साररूपेति । नाद्यः भगवतो मायावश्यत्वाश्रवणात् स्वतः पूर्णत्वाच्च, न द्वितीयः अतिशयासिद्धेः, नापि तृतीयः जैवयोस्तयो चोदिष्टत्वात् किन्तु चतुर्थ एवासौ भवेत् ॥३८॥

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

साध्यप्रेमरूपतया च ज्ञानद्वैविध्ये सतीत्यर्थः । यथेति छान्दोग्ये । यथाक्रतुर्यादृशोपासनः इतो लोकात्प्रेत्य परलोकमासाद्य तथा तदुपासनानुयायिफलो भवतीत्यर्थः । ये यथेति - ये यथेति श्रीगीतासु । नायमिति श्रीदशमे । अयं गोपिकासुतो यशोदौरस्यो भगवान् कृष्णः देहिनामारुरुक्षुज्ञानिनामात्मभूतानामारूढज्ञानिनां च तथा सुखदो न यथेह गोपिकासुते भक्तिमतामित्यर्थः ॥३७॥

मायाबश्यत्वेति-"माया परैत्यभिमुखे च बिलज्जमाना" इत्यादिस्मृतिभ्यः । स्वतः पूर्णत्वाच्चेति - 'पूर्णमदः पूर्णमिदम्" इत्यादिश्रुतिभ्यः । अपूर्णो हि जीवः प्राकृतं ज्ञानानन्दमिच्छति तदर्थमुद्यतते । अतिशयासिद्धेरिति । आनन्दस्वरूपोऽपि भगवान् भक्त्या-

३७ ) सिद्धान्तरत्नम् पाद १ ]

भक्तौ खलु भगवान् स्वयमेव वशीभूतस्तिष्ठति तामरसकोशे मधुप इव रसिकयुवत्यां रसिकयुवेवेति श्रुतिस्मृतिभ्यः प्रतीयते । तत्प्रतीतार्थान्यथानुपपत्तिप्रसूतयार्थापत्त्या तु "ह्लादिनी संधिनी सम्वित्त्वय्येका सर्वसंश्रये । ह्लादतापकारी मिश्रा त्वयि नो गुणवर्जिते" इति श्रीविष्णुपुराणोक्तस्वरूपविशेषभूतह्लादिनीसम्वित्साररूपा सेति निश्चीयते ॥३९॥

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

नन्दातिशयी भवतीति बद्यमाणस्यानन्दाधिक्यस्यासंभवादित्यर्थः । किन्त्विति - चतुर्थस्तदुभयसारात्मा चतुर्थप्रकार एवासौ भक्तिरित्यर्थः ॥३८॥

अथ लौकिकदृष्टान्तेन सुखरूपां भगवतो भक्तिबश्यतां ग्राहयति भक्तावित्यादिना । श्रुतिस्मृतिभ्य इति, भक्तिबशः पुरुषः भक्तियोगे तिष्ठति, अहं भक्तपराधीन इत्यादिभ्य इत्यर्थः । तत्प्रतीतेतिताभ्यः प्रतीतोऽधिगतो यो भगवतो भक्तिबश्यतालक्षणोऽर्थः सोऽन्यथा भक्तेर्भगवत्स्वरूपविशेषभूतल्हादसंबित्सारस्वभावत्वोपपत्तिर्न सिध्यते तत्प्रसूतया तदन्यथानुपपत्तिज्ञातया अर्थापत्त्या प्रमाणेन तु ल्हादिनीत्यादिवाक्यसिद्धतदुभयसारात्मा भक्तिरिति लभ्यत इत्यर्थः । असिध्यदर्थदृष्ट्या तत्साधकान्यार्थकल्पना ह्यर्थापत्तिः पीनश्चैत्रोऽह्नि न भुङ्क्ते इत्यत्र यथा अहन्यभुञ्जाने चैत्रे पीनत्वमसिद्धं तत्साधकं अत्र रात्रिभोजनं कल्पयति तथा श्रूयमाणं भगवतो भक्तिबश्यत्वमसिध्यत् तत्साधकं भक्तेस्तद्विशेषभूतह्लादसम्बित्सारत्वं कल्पयतीति । ह्लादिनीति ध्रुबबाक्यम् । जीवाद्वैलक्षण्येनेश्वरं स्तौति ।

तथाच्च ह्लादसंविदोः समवेतयोः सारो भक्तिरिति सिध्यति । तत्सारत्वं च तन्नित्यपरिकराश्रयकतदानुकूल्याभिलाषविशेषः । इत्थम्भूता भक्तिरित्यभिप्रायेणैव सच्चिदानन्दैकरसतायां विशिनष्टि श्रुतिस्तस्यां भगवद्वश्यतां च दर्शयति "विज्ञानघना" इत्यादिना "भक्तिरेवैनं नयति" इत्यादिना च ॥४०॥

ननु ह्लादिन्यादिरूपा सा भक्तिर्भगवत्स्वरूपभूता–

हे भगवन् सर्व्वसंश्रये निखिलपरमाश्रये त्वयि ल्हादिन्यादित्रिवृत्तिका एका अभिन्ना शक्तिर्वर्त्तते सत्वांशेन मनः प्रसादलक्षणा ल्हादकरी तमोऽंशेन बिषयबियोगादितापकरी रजोऽंशेन तदुभयोदयान्मिश्रेत्येवं त्रिगुणा प्रकृतिस्त्वयि नो बर्त्तते । कुत इत्याह गुणेति । मायागुणास्पृष्ट इत्यर्थः । सा तु जीवेष्वेव बर्त्तते इति जीवेभ्यस्त्वमन्योऽतिसुखैश्वर्य्यबानित्यर्थः । ३९॥

निषिध्यति तथाचेति । समवेतयोरभिन्नयोरित्यर्थः । एकेत्युक्तेः । तत्सारत्वञ्चेति । ह्लादाभिन्नायाः सम्बिदः । यस्तस्यानुकूल्यांशः स तस्याः सार इत्यर्थः । स च क्षीरसारबत् पुष्पसौरभबच्च बोध्यः । अभिलाषविशेष इति । कृष्णान्यतृष्णाशून्या कृष्णमात्रतृष्णेत्यर्थः धर्म्मभूतज्ञानोद्भूतया तादृश्या तृष्णया सह क्षीरनीरन्यायेनैकीभूतस्तदानुकूल्यांशो भक्तिरिति याबत् । सा तथाभूता भक्तिर्नित्ये धाम्नि नित्यपार्षदेषु नित्यं चकास्ति सुरसरिदिव तद्भक्तप्रणाल्या प्रपञ्चेऽप्यवतरतीति भाष्येऽपि भणितम् । इत्थम्भूता बर्णितलक्षणा ।।४०॥

पुनः शङ्कते नन्विति । स्वरूपशक्तिरिति स्वरूपभूता शक्ति-



ज्ज्ञानानन्दान्नातिरिच्यते यदसौ स्वरूपशक्तिरिति भवद्भिरेवोक्तम्, कथमधुना भगवत्स्वरूपज्ञानानन्दत्वं भक्तेः प्रत्याख्यायत इति चेत् – अत्राचक्ष्महे–न खलु पराभ्युपगतनिर्विशेषचैतन्यमात्रवदत्र ब्रह्मस्वरूपं स्वीकुर्महे किन्तु स्वरूपशक्तिमदेव, शक्तिश्च स्वरूपानतिरेकिण्यपि तद्विशेषतयावभासतेऽन्यथा तस्य शक्तिरिति व्यपदेशासिद्धे ॥४१

अवयबावयविभाववदेष प्रत्ययः, यथा करचरणाद्यवयविनः कराद्यवयवानामनतिरेकेऽपि तद्भावप्रतीतिर्वैदुषी तथैतद्द्रष्टव्यम् । न ह्येषा निर्मूला कल्पना "नेह नानास्ति

रित्यर्थः । न खल्बिति । पराभ्युपगतेति मायिस्वीकृतेत्यर्थः । अत्रेति मध्वमुनिसिद्धान्ते इत्यर्थः । किन्त्विति सत्ता सतीत्यादौ सत्तादीनां सत्ताद्यभिन्नसत्वादिमत्त्वबत् स्वरूपाभिन्नतच्छक्तिमत् स्वीकुर्म्महे इत्यर्थः ।।४१॥

बिद्वद्दृष्टान्तेनोक्तमर्थं हृद्यारोहयन्नाह अबयवेति प्रकटार्थम् । सांख्यादिमतेनेदं बोध्यं न तु नैयायिकादिमतेन । अत्र तयोर्भेदाङ्गीकारादिति भाष्येऽस्य बिस्तरः । प्रतिषेधाच्चेति ब्रह्मसूत्रम् । परास्य शक्तिर्बिबिधैव श्रूयत इति शक्तेः स्वरूपाद्भेदे बिभातेऽपि स्वाभाविकीति भेदप्रतिषेधात् न गुणगुणिभेदः इत्यर्थः । लौकिकदृष्टान्तेनाक्षिनिकृष्टं ग्राहयन्नाह तथा च बर्त्तुलेत्यादिना । तयोरिति यूनोरित्यर्थः । भुजो यथा यूनोऽभिन्नो युवत्यास्तु भिन्नः तथा ह्लादिनीसाररूपा भक्तिर्भगवतोऽभिन्ना भक्तात् तु भिन्ना इत्यर्थः । अपृथग्बिशेषणतया सत्ता सतीतिबदभिन्नविशेषणभावेनेत्यर्थः । पृथग्बिशेषणतया भूषणीत्यादिबत् भिन्नविशेषण-

किञ्चन" इत्यादिश्रुतिस्मृतिभ्यः "प्रतिषेधाच्च" इति न्यायाच्च । तथा च वर्त्तुलत्वकोमलत्वादिविशिष्टो यूनो भुजो यथा युवत्याः स्कन्धे निहितस्तयोः परानन्दाय सम्पद्यते तथा भगवत्स्वरूपविशेषभूतह्लादिन्यादिसारात्मा भक्तिर्भगवत्यपृथग्विशेषणतया भक्ते च पृथग्विशेषणतया सिद्धा तयोरानन्दातिशयाय भवतीति सर्वं निरवद्यम् ॥४२॥

तत्र सन्धिनीसम्वित्ह्लादिन्यो यथोत्तरमुत्कृष्टा ज्ञेयाः । तत्र सदात्मापि यया सत्तां धत्ते ददाति च सा सर्वदेश-

---

भावेन इत्यर्थः । तयोरिति भगवद्भक्तयोः ॥४२॥

ह्लादिन्यादीनां तिसृणां स्वरूपाणि कार्य्याणि च वक्ष्यन् तासां उत्तरोत्तरं उत्कर्षक्रममाह तत्रेति । तत्र सदात्मेति - अस्तीत्येवोपलब्धव्य इत्याद्युक्तसत्यात्मकोऽपि यया सदेव सौम्येत्याद्युक्तां सत्तां धत्ते द्रव्यकर्म्मकालस्वभावजीवेभ्यः सत्तां तत्तत्कार्य्यक्षमतां ददाति सा सन्धिनी । सम्विदात्मेति - सत्यं ज्ञानमित्याद्युक्तसम्विद्रूपोऽपि यया प्रतापी शूर इतिवत् यः सर्व्वज्ञ इत्युक्तसम्विद्वान् भवति ययैव प्रज्ञा च तस्मात् प्रसृता पुराणी त्वत्तो ज्ञानं हि जीवानाम् इत्याद्युक्तधर्म्मभूतज्ञानविशिष्टान् जीवान् करोति सा सम्वित् । ह्लादात्मेति - विज्ञानमानन्दं ब्रह्मेत्याद्युक्तानन्दस्वरूपोऽपि ययानन्दं ब्रह्मणो विद्वान् इत्याद्युक्तानन्दवान् भवति यया च सम्विदभिन्नया श्रवणादिभावादिनाम्न्या स्वानुकूल्यभूतया स्वसान्मुख्यान् जीवानानन्दयति रसं ह्येवायं लब्ध्वानन्दी भवति इत्याद्युक्तप्रशस्तानन्दभाजः करोति सा ह्लादिनीति । एकस्यास्तस्या भक्तेस्त्रिधा भानं दृष्टान्तेन साहयति तत्ता-



कालद्रव्यव्याप्तिहेतुः सन्धिनी, सम्विदात्मापि यया सम्वेत्ति संवेदयति च सा सम्वित्, ह्लादात्मापि यया ह्लादते ह्लादयति च सा ह्लादिनीति तत्तत्प्राधान्येन स्फूर्त्तेस्तत्तद्रूपता तया एकस्या वैदूर्य्यवदवसीयते ॥४३॥

सा तदुभयसारांशरूपा रतिप्रेमाख्या भक्तिर्भक्ते भगवति चात्मानं निक्षिप्य मिथस्तावनुरञ्जयति । यदुक्तम्— "साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् । मदन्यत् ते न जानन्ति नाहं तेभ्यो मनागपि" इति, "विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः । प्रणयरसनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः" इति च भक्तेषु भगवद्भक्तिश्च दर्शिता, "एवं स्वभक्तयो राजन् भगवान् भक्तभक्तिमान् । उषित्वादिश्य सन्मार्गं पुनर्द्वारावतीमगात्" इत्यादौ ॥४४॥

---

दिति । यथा एकस्यैव वैदूर्य्यस्य नीलपीतादिरूपता तथा एकस्याः परायाः सन्धिन्यादिरूपतेत्यर्थः ॥४३॥

भगवति चात्मानं निक्षिप्येति विशेषहेतुकात् वास्तवात् भेदकार्य्यादिति भावः । साधव इति नवमे श्रीभगवद्वाक्यम् । विसृजतीत्येकादशे हवियोगेश्वरवाक्यम् । भक्तेष्विति - भगवत्कर्त्तृका भक्तानुकूल्यलक्षणा भक्तिरानन्दसम्विद्रूपेत्यर्थः । एवमिति दशमे श्रीशुकवाक्यम् । स्वभक्तयोः श्रुतदेवबहुलाश्वयोः ब्रह्मर्षिराजर्षिवर्य्ययोः मिथिलावर्त्तिनोः । उषित्वा स्थित्वा, तौ प्रति सन्मार्गमादिश्य ॥४४॥

अतएव भक्तानन्दाय तस्य विविधः प्रयत्नोऽपि "मुहूर्त्तेनापि संहर्तुं शक्तो यद्यपि दानवान् । मद्भक्तानां विनोदार्थं करोमि विविधाः क्रियाः । दर्शनध्यानसंस्पर्शैः मत्स्यकूर्मविहङ्गमाः । स्वान्यपत्यानि पुष्णन्ति तथाहमपि पद्मज" इति तदुक्तेः ॥४५॥

तस्मात् परमानन्दमयोऽपि ययानन्दाऽतिशयी भवति स्वरूपानन्दं चानुभवति तं तमानन्दमनुभावयति च भक्तान् तस्याः सत्त्वमयानन्दादिरूपत्वं कथमिति परमपुमर्थरूपत्वं भक्तेः सिद्धम् । ज्ञानफलं भगवान् भक्तिफलं तु भक्तिरेव तद्विषया तस्या एवोदग्रानन्दत्वात् ॥४६॥

आनन्दादिरूपायास्तस्याः कायादितादात्म्येनाविर्भूतायाः क्रियाकारत्वमानन्दचिन्मूर्त्तेः कुन्तलादिप्रतीकत्ववदवसेयम् । कुपितपित्तेन सितामाधुर्य्यमिवाविच्छिन्न-

---

अतएवेति - भक्तभक्तिमत्वादेव, तस्य भगवतः, मुहूर्त्तेनेति पाद्मे । दर्शनेति - यथासंख्यमत्रालङ्कारः । दर्शनेन मत्स्यः ध्यानेन कूर्म्मः संस्पर्शनेन विहङ्गमः यथा स्वानि अपत्यानि पुष्णाति तथाहं स्वभक्तान् इत्यर्थः ॥४५॥

उपसंहरति तस्मादिति । यया निरूपितया भक्त्या । ज्ञानफलमिति । तत्पदार्थानुसन्धिरूपस्य ज्ञानस्य साध्यमित्यर्थः । अत उक्तं नारदीये श्रीभगवता - "सर्व्वमङ्गलमूर्द्धण्या पूर्णानन्दमयी सदा । द्विजेन्द्र तव मय्यस्तु भक्तिरव्यभिचारिणीति" ॥४६॥



संसारेण तदादिरूपत्वं तस्याः पूर्वं नानुभूयते तत्संसेवया तु क्रमेण तथात्वमनुभूयत इति ।४७॥

अतएव सिद्धानां तस्यां प्रवृत्त्यनुपरम इत्याह भगवान् सूत्रकारः "आप्रायणात् तत्रापि हि दृष्टम्" इति । न चैवं भक्तिपुरुषार्थवादिनां भगवत्पुरुषार्थताविगमः तस्यास्तदविनाभावेन तयैव तस्यापि प्राप्तेः । तथाच भक्तिमतां भक्तिविषयो भगवान् पुरुषार्थ इति निष्कृष्टमिति ॥४८॥

तस्मात् कर्मणश्चित्तशुद्धावुपयोगः ज्ञानभक्तिरूपाया विद्यायास्तु साक्षात्तत्प्राप्ताविति न काचिद्विक्षतिः ॥४९॥

---

ननु श्रवणादेः क्रियाया भक्तेः कथमानन्दादिरूपत्वं प्रत्येतव्यं तत्राह आनन्दादीति । कायादीति--भक्तदेहेन्द्रियसम्बन्धेनेत्यर्थः, कुन्तलादीति—चिकुरनखराद्यङ्गवदित्यर्थः, अङ्गं प्रतीकोऽवयव इत्यमरः । तर्हि श्रवणादिभक्तेरानन्दादिरूपत्वं कुतो न प्रतीयते तत्राह कुपितेति । तदादिरूपत्वमानन्दसम्बित्सारत्वम् । पूर्व्वं संसारदशायां तत्संसेवया श्रवणादिभक्त्यावृत्त्या ॥४७

सिद्धानां विमुक्तानाम । आप्रायणादिति आमोक्षात् तत्रापि मोक्षे च भगवत्कैङ्कर्य्यं शास्त्रेषु दृष्टमित्यर्थः । तस्य इति – भक्तेर्भगवदविनाभावेन हेतुना भक्तिलाभेनैव तद्विषयस्य भगवतश्च लाभादित्यर्थः । एतदेवाह तथाचेति ॥४८॥

मुख्यं प्रकरणमुपसंहरति - न काचिदिति । मोक्षहेतुतयोक्तयोः कर्म्मभक्त्योश्चात्र संग्रहान्न काचिदूनतेत्यर्थः ॥४९॥

ये तु केचित् सद्विशेषप्रसङ्गादारम्भत एव भक्तिप्राप्तास्ते पुनर्भक्त्यैव चित्तशुद्धिं तत्साक्षात्कृतिं च भजन्ते, "पिबन्ति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु संभृतम् । पुनन्ति ते विषयविदूषिताशयं ब्रजन्ति तच्चरणसरोरुहान्तिकम्" इत्यादिस्मरणात् । एतानुद्दिश्य श्रुतिराह—"तपसा ब्रह्मचर्येण शुद्धया विद्ययात्मानमन्विष्येत्" इति ॥५०॥

एषा खलु भक्तिरहैतुक्येव तां साधयति न त्वन्यादृशी । "अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे । सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ॥ दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः । स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः" इत्यादिस्मृतेः ॥ अहैतुकी निष्कामा विशुद्धेति पर्यायाः । अव्यवहिता मधुधारावन्निरन्तरा या भक्तिस्तस्यां सत्यामिति शेषः । मत्सेवनं ममानन्दात्म-

स्वनिष्ठानां परिनिष्ठितानाञ्च कर्म्मपूर्व्वां साधनपद्धतिं प्रदर्श्य निरपेक्षाणामकर्म्मपूर्व्वां तां दर्शयति ये त्विति । केचित् नारदादयः ते पुनरिति । ते अकर्म्मनिष्ठा द्वितीया इत्यर्थः । पुनरप्रमिते भेदे इति विश्वः । पिबन्तीति द्वितीये श्रीशुकवाक्यम् । तपसेति – तपसा हरिबासरादिव्रतेन ब्रह्मचर्येण मैथुनवर्जितेन श्रद्धया श्रीभागवतादिशास्त्रार्थदृढविश्वासेन विद्यया नवविधया भक्त्या भावलक्षणया च आत्मानं हरिमन्विष्येत् साक्षात् चिकीर्ष्येत् ॥५०॥



कस्य भक्तिरसिकस्य प्रेमसेवां विनेत्यर्थः । सालोक्यादिकं पृष्ठलग्नमिवेति तस्येह नाभिलाषः ॥५१॥

ननु भक्तेर्निष्कामत्वं न संभवति तत्प्रसादितेन भगवता दीयमानस्यानन्दस्य काम्यत्वात् । यथा भावहावादिप्रसादितेन कान्तेनार्थ्यमानं रतसुखं तरुण्या काम्यते । तच्च कान्तादन्यदेवेति । एवमेव श्रुतिरप्याह "एष एवानन्दयति रसं ह्येवायं लब्ध्वानन्दी भवति" इति चेत्—मैवम् । भक्तेः फलं चेद् भजनीयादन्यत् स्यात् यथा कान्तादन्यत्तादर्पितं रतसुखं तर्हि सा सफला भवेत् । प्रकृते तु भजनीयो भगवानेव फलं आनन्दात्मत्वात् "आनन्दो ब्रह्मेति व्यजानात्" इति श्रुतेः । किञ्च कान्त-

एषेति - तां तद्वश्यतोपेतां तत्साक्षात्कृतिम् । अहैतुकीति तृतीये । तस्येहेति - इह अहैतुके भक्तियोगे । अत्र सालोक्यादितः सेवाया महानुत्कर्षः तद्वतां तत्रानादरात् परानन्दस्य स्वामिनः तत्र सम्यगनुभवाच्च ॥५१॥

भक्तेरहैतुकतामाक्षिपन्नाह नन्विति । प्रसादितेनेति । तया भक्त्या परितोषितेनेत्यर्थः । आनन्दस्य तेन सह दिव्यरसगन्धाद्यनुभवादागतस्य सुखस्य तत्स्वरूपादन्यस्येत्यर्थः । दृष्टान्तेन ग्राहयति यथेति । भावः प्रेमाङ्कुरः, हावस्तु प्रेममञ्जरीति, लक्षणमेषां साहित्यशास्त्राद्बोध्यम । रतसुखं सम्भोगानन्दः, तच्च कान्तादन्यदेवेति । सेव्याभिन्नं चेत् सेवायाः फलं तर्हि सा सकामेत्युच्यत इति भावः । एष इति । आनन्दयति सालो-

स्यानन्दसाधनत्वमेव । भगवतस्त्वानन्दरुपत्वात् फलरूपत्वं निर्विवादम् । एवं च पुरुषार्थमूर्त्तित्वात्मदातृत्वोक्तयो न व्याकुप्येयुः । एष एवानन्दयातीत्यत्रात्मदानेनेति रसमित्यत्र तु रसेनैव तेन लब्धेन सानन्दो भवतीति च व्याख्येयम् ।।५२।।

स्यादेतत् भक्तकृतानुकूल्याद् भगवतः स्वरूपोल्लासरूपं सुखं जलकल्लोलवद् भवतीति भाषितमहिकुण्डलाधिकरणे । स्मृतिश्च "प्रीतिः स्वयं प्रीतिमगाद्गयस्य" इति "सख्युः प्रियस्य विप्रर्षेरङ्गातिनिर्वृतः । प्रीतो व्यमुञ्चदब्विन्दून् नेत्राभ्यां पुष्करेक्षण" इति च । तेनानुभूतेन स्वसुखोल्लासात् सकामत्वं भक्तेः प्राप्तं घट्टकुड्यामेव प्रभातमिति चेत् मन्दमेतत् ।

---

क्यादि दत्वा सुखयति । दैर्घ्यं छान्दसम् । रसमिति रसात् तस्मादुपलब्धेन सालोक्यादिनातिसुखी भवतीत्यर्थः । निरस्यति मैवमिति । भक्तेरित्यादिकमगूढार्थम् । एवञ्चेति - भगवत आनन्दरूपत्वे सतीत्यर्थः । "एवं प्रकारोपमयोरिति श्रीधरः" । "सत्याशिषो हि भगवंस्तव पादपद्ममाशीस्तथानुभजतः पुरुषार्थमूर्त्तेः । अप्येवमार्य्य भगवान् परिपाति दीनान् वाश्रेव वत्सकमनुग्रहकातरोऽस्मा" निति ध्रुववाक्ये पुरुषार्थमूर्त्तित्वम । ददात्यात्मानमप्यज इति निमिनृपतिवाक्ये आत्मप्रदत्वञ्च द्रष्टव्यम् । एवमन्यानि च वाक्यानि मृग्याणि ।।५२।।

पुनराशङ्कते स्यादिति । प्रीतिरिति पञ्चमे शुकोक्तिः । प्रीतिरानन्दरूपो भगवान् गयस्य राज्ञः स्वभक्तस्य प्रीतिमानन्द-



तेनानुभूतेन मत्सुखं स्यादिति धिषणानुदयात् शुद्धभक्तानम् इतरथा । तेषामहैतुकीत्यादिवाक्यानां व्याकोपापत्तिः । तत्सुखमेव मत्सुखमिति तु निष्कामतां भक्तेर्नापहन्ति किन्तु पुष्णात्येव तामिति ।। ५३ ।।

एषा तु भक्तिस्तन्नित्यपरिकरगणादारभ्येदानीन्तनेष्वपि तद्भक्तेषु मन्दाकिनीवत् प्रचरति, अतस्तद्भक्तकृपयैव लभ्येति श्रीभागवतादिसम्वादः । तथा च भजनी-

---

मगात् प्राप्तः । सख्युरिति दशमे श्रीशुकवाक्यम् । विप्रर्षेः सुदाम्नः अङ्गसङ्गेन अतिनिर्वृतः परमानन्दी सन् । प्रीतः तं वीक्ष्य प्रसन्नचेताः । तेनेति - तेन अत्यानन्दितेन भगवदनुभूतेन स्वस्य भक्तस्य सुखोल्लासात् सकामा भक्तिः । एतत्सुखकामनया तद्भक्तौ कृतत्वादिति भावः । परिहरति मन्दमित्यादिना । प्रकटार्थमेतत् । मत्सुखमिति भक्तस्य मम स्वरूपोल्लासलक्षणं सुखमित्यर्थः । इतरथा उक्तानङ्गीकारे आनुकूल्यात्यानन्दितस्य भक्तसुखस्याङ्गीकारे सति निष्कामभक्तिप्रतिपादकवाक्यगणव्यकोपादित्यर्थः । एतेनैव महानुकूल्यसमानन्दितस्य भगवतोऽनुभवेन मदत्यानन्दः स्यादिति भक्तस्य धिषणायामुदितायां सकामत्वं भक्तेः प्राप्तं निवारयितुं तदुल्लासानुभवाभ्युदितेन स्वोल्लासेन पुनस्तत्सुखस्पृहाया वक्तुं शक्यत्वादिति सिद्धान्तिनः कल्पनाः मामुल्लसितं वीक्ष्य उल्लसितस्य भगवतो वीक्षणेन मे महानन्दः स्यादिति कामनया भक्तस्तमनुकूलयतीत्युक्ते भक्तेः पुनः सकामत्वं स्यादिति पूर्व्वपक्षिणः कल्पना च निरस्ता वेदितव्या । ५३।।

यस्यानन्दरूपत्वाद् भक्तेर्निष्कामत्वं तद्विषयस्य तस्य-पुरुषार्थरूपत्वं च सिद्धम् ॥ ५४ ॥

नन्वानन्दरूपो भगवानिति नोपयुज्यते सीतादिव्यसनलालसेन तेन वैषयिकानन्दस्य समीहनात् । तस्माच्छब्दस्पर्शादिविषयसेवया वैषयिकं नाम सुखमुपजायते । तदेवेह चामुत्र च स्वर्गशब्दव्यपदेश्यमानन्द इति वेदज्ञा मन्यन्ते, यस्य लिप्सया लोकः सर्वां मर्यादामतिक्रम्य प्रवर्तते । भगवतः सुखरूपत्वे तस्य तल्लालसा न स्यात् । सर्वस्य च लोकस्य तल्लिप्सया भाव्यम्, न चैतदस्ति विषयालाभात्तदनर्हत्वाच्च । केचित् पङ्ग्वन्धबधिरालसा जरातुराश्चानुक्तवैराग्याः सुखिनो वयमिति रिक्तभाषयाऽज्ञान् प्रतारयन्ति । तस्माद्वैदिकैः शुभकर्मभिर्विषयोपलम्भस्ततसेवया सुखोत्पत्तिर्दुःखहानिस्तु तच्छेषभूत एव दीपप्रकाशस्य तिमिरनिवृत्तिरिवेति चेत् ॥ ५५ ॥

---

भक्तियोगोऽयं नाधुनिकः किन्त्वनादिरित्याहुः एष त्विति। नित्ये धाम्नि स्थिता नित्यपार्षदाः तेभ्यः परम्परया गङ्गाप्रवाहवदिहापि भक्तेरागमादित्यर्थः । न ह्यवताराबसरे स्वामिना सार्द्धमिहाप्यागच्छन्ति रूपान्तरेण ॥५४॥

भगवत आनन्दरूपत्वात् तदर्थिका भक्तिर्निष्कामेत्यापादितम् । तत्र कर्म्मठाः शङ्कन्ते नन्विति । सीतादीति । व्यसनं व्यासङ्गः । आदिना सत्यभामादेर्ग्रहणम् । सीतायां (सीताया) व्यसनं श्रीरामायणे भामायास्तु श्रीहरिवंशे द्रष्टव्यम् । स्वर्गशब्देति–सुख-



उच्यते--पामरं ब्रवीषि विषयरसिको विशुद्धानन्दानभिज्ञः । अस्ति हि वैषयिकातिरिक्तसुखसम्पत् । सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति श्रुतेः । इह हि सुषुप्तिसुखं निर्विषयं प्रतीयते । सार्वलौकिकं चैतत् । एवञ्च जीवस्याणुभूतस्याजन्यसुखरूपत्वे सिद्धे विभोर्भगवतस्तु तादृशविपुलसुखरूपत्वं सिध्यति । "यो वै भूमा तत सुखम्" इति, "आनन्दो ब्रह्मेति व्यजानात्" इति च श्रुतिस्तथाह । किञ्च वैषयिकं नाम सुखमिन्द्रियैर्विषयग्रहेऽभिनिष्पद्यते तदग्रहे विनश्यतीति सर्वानुभूतम्, भगवद्रूपं सुखं तु विषयत्यागेऽभिव्यज्यते तत्परिग्रहे तिरोभवतीति ।

---

बिशेषः स्वर्गः नतुलोकबिशेषः इति वेदज्ञा भट्टादयो भगबद्वहिर्मुखा मन्यन्ते, न चेदं जैमिनेर्मतं केवलाद्वैतमिव व्यासस्येति वोध्यम् । यस्येति वैषयिकस्य सुखस्य । सर्व्वामिति लोकिकीं वैदिकीञ्च । तल्लालसा सीतादिव्यसनतृष्णा । तल्लिप्सया भगबत्स्पृहया । न चैतदिति । नैवं दृश्यते किन्तु बिषयस्पृहैव दृश्यत इत्यर्थः । तर्हि ज्ञानवैराग्यशास्त्राणि व्यर्थानीति चेदोमित्याह–बिषयालाभादिति । रिक्तभाषया व्यर्थवाण्या, शास्त्राणि तदनुबादीनीति भावः ॥५५॥

प्रत्याचष्टे उच्यत इत्यादिना । निर्व्विषयमिति । न खलु सौषुप्तिकं सुखं शब्दस्पर्शादिभोगजन्यमित्यर्थः । तादृशेति । अजन्येत्यर्थः । किञ्चेति–"किञ्चारम्भेऽपि साकल्ये" श्रीधरः । अनेन अन्यत् प्रत्याख्यानमारभ्यते तस्य कार्त्स्न्येन वा तत् कार्य्यमित्यर्थः । वैषयिकं शब्दादिभोगजन्यम । नाबिरत इति काठके ।

"नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्त--मानसो वापि प्रज्ञानेनैनमाप्नुयात्" इत्यादिश्रुतेः, "विषयाविष्टचित्तानां विष्णवावेशः सुदूरतः । वारुणीदिग्गतं वस्तु व्रजन्नैन्द्रीं किमाप्नुयात्" इत्यादिस्मृतेश्च ॥५६॥

वैषयिकं च सुखं तत्प्रतिच्छविरूपमेवेति श्रुतिराह– "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति । अत एव सर्वानन्दहेतुत्वं च तस्य सिद्धम् । उपेक्ष्यश्च विषयानन्दः "सुखमैन्द्रियकं राजन् स्वर्गो नरक एव च ।

---

यो दुश्चरितान्निषिद्धाचारादविरतोऽनिवृत्तः योऽशान्तोऽजितबहिरिन्द्रियः यश्चासमाहितः अकृतसमाधिः स एनं परमात्मानं प्रज्ञानेन नाप्नुयात् तस्य प्रज्ञानं नोदयेदित्यर्थः । विषयेति श्री–भागवते–वारुणीगतं प्रतीच्यां नष्टं ऐन्द्रीं प्राचीं व्रजन् ॥५६॥

यज्ञादिकर्म्मभिर्विषयोपलम्भः तैरेव निषेवितैरानन्द इति वादिनः कर्म्मठान् निराकुर्व्वन्नाह वैषयिकञ्चेति । एतस्यैवेति । भगवत्सान्निध्यात् सत्त्वं सुखात्मना परिणमते यच्चोत्कृष्टशब्दादिविषयैर्भक्तैरभिव्यज्यत इति तस्य भगवद्धेतुकत्वात् स तदंश इत्यर्थः । अतएवेति मोक्षानन्दस्य विषयानन्दस्य च दानादित्यर्थः । सर्व्वानन्दहेतुत्वञ्च तस्येति । "एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्"इत्यादिश्रुतेः । "स्वर्गापवर्गयोः पुंसां रसायां भुवि संपदाम् । सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्" इत्यादि स्मृतेश्च । ततश्च सर्वार्च्यत्वं तस्यैव व्यज्यते । तर्हि विषयानन्दोऽपि तद्धेतुकत्वान्मोक्षवत् काम्योऽस्तु तत्राह–उपेक्ष्य–श्चेति । सुखमिति श्रीभागवते । ऐन्द्रियकं बिषयग्राहिभिरिन्द्रियैः



देहिनां यद्यथा दुःखं तस्मान्नेच्छेत तद् बुधः" इत्यादिस्मृतेः । विषयानन्दाय लोकस्य प्रयासः सर्वां मर्यादामुल्लङ्घ्य प्रवृत्तिश्च युज्यतेऽनुभूतत्वात् । भगवतस्तु विशुद्धानन्दरूपस्याननुभूतत्वात्तत्त्वानास्मै तामुल्लङ्घ्य प्रवृत्तिर्न समस्ति । कथञ्चिदनुभूते तु तस्मिन् सर्वं परित्यज्य सा दृष्टा यथा च कासाञ्चिद् व्रजसुभ्रुवाम् ॥५७॥

ननु भगवतोऽपि विषयविशिष्टत्वात्तत्तद्विषयसेवाजन्यानन्दाय तेषां तासां च तथा प्रवृत्तिरिति चेत् मन्दमेतत्, तद्विषयाणामपि स्वरूपानन्दानतिरेकात् । तथा च श्रुतिः " नेह नानास्ति किञ्चन" इत्याद्या, स्मृतिश्च "आनन्द-

---

सिद्धम । अनियतस्वभावत्वाद्विषयैर्वस्तुतः सुखं नेत्याह श्रीपराशरः । "वस्त्वेकमेव दुःखाय सुखायस्योद्भवाय च । कोपाय च ततस्तस्माद् वस्तु वस्त्वात्मकं कुतः ॥ तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते । तदेव कोपाय यतः प्रसादाय च जायते ॥ तस्माद् दुःखात्मकं नास्ति न च किञ्चित् सुखात्मकम । मनसः परिणामोऽयं सुखदुःखादिलक्षणः" इति । नन्वानन्दश्चेद् भगवान् तर्हि सर्वस्तत्रैव च रमेन्नतु विषयानन्दे इति चेत्तत्राह-विषयानन्दायेति । तस्मै तामिति। तस्मै भगवते तं प्राप्नुयामित्यर्थः । तां सर्वा मर्यादाम । कासांचिदन्तर्गृहगतानाम् ॥५७॥

पुनरपि हरेरानन्दरूपतामाक्षिपन्तः कर्मठाः प्राहुः नन्विति । विषयविशिष्टत्वादुत्तमशब्दस्पर्शादिमत्त्वात । तेषां शुकादीनां तासां कासाञ्चिद् ब्रजसुभ्रुवां च । निरस्यति मन्दमेतदित्यादिना । तद्विषयाणां भगवदभिन्नविग्रहधर्माणां शब्दस्पर्शादीनां

मात्रकरपादमुखोदरादिः" इत्याद्या । अतएव तेषामतिक्षोभकत्वम् । शुद्धभक्तानां तत्त्वज्ञानात्तत्र निष्कामा प्रवृत्तिरित्यभिज्ञाहितं "अहैतुकाव्यवहितो" इत्यादिना । सुखसाधने प्रवृत्तिः सकामा, सुखे तु सा निष्कामेति सर्वाभ्युपगतम् । तस्माद्विपुलानन्दरूपो भगवानिति सिद्धः । ईदृशोऽपि स भक्तियन्त्रितः पुरुषार्थत्वाय प्रकाशाय वह्निरिव मथित इत्यवसेयम् । सीतादिनां तु स्वरूपशक्ति वृत्तिभूतह्लादिनी--सारसमवेतसम्वित्सारात्मकत्वात्तद्व्यसनलालसेनापि न कोऽपि दोषः ॥ ५८ ॥

ननु पूर्णानन्देन भगवता भक्तैस्तज्ज्ञैरर्प्यमाणाः सेवा गृह्यन्ते इति नोपयुज्यते पूर्णानन्देत्यादिविरोधात् ।

---

तेषां तच्छब्दस्पर्शादीनामत एव स्वरूपानुबन्धित्वादेवातिक्षोभकत्वम् । तत्रेति-भगवति तद्भजन इत्यर्थः । भगवद्भक्तेर्निष्कामतां ग्राहयति सुखेति । सुखसाधने तरुण्यादौ तन्निष्ठे शब्दादिविषयग्रामे तन्निषेवालक्षणा प्रवृत्तिः सकामा तन्निषेवाजन्याय सुखाय कृतत्वात् तज्जन्ये सुखे तु सा निष्कामा । न खलु सुखादन्यत् फलमिच्छन् सुखं निषेवते, अतस्तन्निषेवा निष्कामेति सर्वज्ञातमेतदित्यर्थः । तस्मादिति । निष्कामभक्तिविषयत्ववचनादित्यर्थः । ननु परमानन्दो विभुर्भगवान् सर्वत्रास्ति सर्वे कुतो नानन्दिनस्तत्राह-ईदृशोऽपीति । भक्तियन्त्रितो भक्तिगृहीतः । स तत्त्वदृशश्चेत् सीतादिव्यसनी कथं तत्राह-सीतादीनामिति । न कोऽपीति नानन्दरूपत्वक्षतिरित्यर्थः । तद्व्यसनिता तस्य संवित्सारात्मतां नातिक्रामतीति भावः ॥ ५८ ॥



"नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते । यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः" इति चेत् मन्दमेतत् । "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" "भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्" "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः" "याः क्रियाः संप्रयुक्ताः स्युरेकान्तगतबुद्धिभिः । ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम्" इत्यादिश्रुतिस्मृतिभ्यः । आसु किल तद्भोक्तृत्वशक्तिभक्तार्पितसादरग्रहणयोरवगमात् स्वभावोचितसेवासु भक्तानां प्रवृत्तिरुपयुक्ता भगवता च भोक्ता प्रेष्ठानां तेषां ताः सादरग्राह्याः । नैवेति वाक्यं त्वेतदनुकूलतया नेयम् ॥ ५९ ॥

---

नन्वस्तूक्तयुक्त्या निष्कामा भक्तिः, सा खलु भगवति न प्रयोज्या तस्य पूर्णत्वेन तद्ग्राहकत्वासंभवादिति शङ्कते-नन्विति । तज्ज्ञैरिति । भगवतः पूर्णत्वादिधर्मज्ञैर्भक्तैस्तस्मिन् सेवाः कथं कार्य्यन्त इति भावः । पूर्णानन्देत्यादीत्यादिना तज्ज्ञत्वविरोधश्च । नैवेति श्रीभागवते प्रह्लादवाक्यम् । अयं प्रभुरविदुषो जनादात्मनो मानं पूजां न वृणीते प्राकृतवन्नेच्छति यतो निजलाभपूर्णः किन्तु करुणत्वाद्वृणीते मां संपूज्यायं जगति पूज्योऽस्त्विति करुणया तत्पूजां स्वीकरोतीत्यर्थः । तत्र हेतुः यो यो भगवते यद्यन्मानं विदधीत तच्चात्मने तस्यैव भवतीत्यर्थः ।

नन्वेवं भोक्तुस्तस्य भोग्यालाभात् क्वचिद् दुःखमपुर्थः प्रसज्येतेति चेत् मन्दमेतत्। "मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" इत्यादिषु भोग्यानां नित्यसिद्धिश्रवणात्। एवं च पूर्तिश्रुतिरपि निर्बाधा। इतरथा भोग्यभोक्तृत्वशक्तिवैधुर्यकृता तस्मिन्नपूर्तिर्भवेत् ॥ ६० ॥

---

तत्र दृष्टान्तः – यथा मुखे कृता श्रीस्तिलकादिशोभा प्रतिमुखस्य मुखप्रतिबिम्बस्य तद्वत् जीवः खलु हरेः रवेरिव शक्र चाप इति बोध्यम्। स इति तैत्तिरीयारण्यके। सलच्च पार्षद्भावो मुक्तः ब्रह्मणा हरिणा सह कामान् दिव्यगन्धादीन् विपश्चिता विविधभोगचतुरेण। भोक्तारमिति श्रीगीतासु, या इति नारायणोपाख्याने, एकत्रेति–तदेकनिष्ठैरित्यर्थः, आस्विति–श्रुतिस्मृतिषु, स्वभावेति–दास्यसख्यादिप्रेमोचितासु। ताः सेवाः। सादरं साकाङ्क्षम् ॥ ५६ ॥

हरेर्भोक्तृत्वाद्भक्तैः प्रेम्णा निवेदितानि तेन तत्प्रेमाकृष्टेन स्वीकार्य्याणीति निरूप्य तत्र दूषणान्तरमागतं निराकर्तुमुत्थापयति — नन्विति। एवं भोक्तृत्वस्वीकारे सति क्वचिद्भोग्यालाभाद्रसगन्धाद्यप्राप्तेरित्यर्थः। दृश्यते हि नृपेन्द्राणामपि मृगयादिप्रवृत्तानां भोग्यालाभान्महद्दुःखमिति भावः। निराकुर्वन्नाह–मन्दमेतदिति। मनोमय इति छान्दोग्ये। मनोमयो बिशुद्धेन मनसा गम्यः "मनसैवानुद्रष्टव्यम्" इति श्रवणात्। प्राणशरीरः प्राणान्तर्यामी स्वभक्तप्राणतुल्यविग्रहो वेत्यपरे। भारूपश्चित्प्रका-



ननु "विजिघत्सोऽपिपासः" इति श्रुत्या भगवतः क्षुत्पिपासाप्रतिषेधान्नित्यतृप्तेन तेन तासां सादरग्रहो न सम्भवेदिति चेत् उच्यते–तत्र हि वायुविकाररूपप्राणाभावात्तत्कार्य्ययोस्तयोः प्रतिषेधो न तु भोक्तृत्वशक्तेश्च तस्याः "सोऽश्नुते" इत्यादिश्रुतिस्मृतिसिद्धेः। तथा च यथा श्रीशुकभीष्मादेः सत्यपि पौरुषे न स्मारविकारः तद्वासनाभावात् तथा भोक्तुरपि तस्य तादृशप्राणाभावात्कार्ये ते नेति। तस्मान्नित्यतृप्तस्यापि तस्य भक्तेच्छैव क्षुत्पिपासे स्वेच्छामयस्येत्यादिश्रुतेः। विलिन-

---

शवपुः, सत्यसंकल्पः सफलमानसक्रिय, आकाशात्मा विभुर्निर्लेपश्च, सर्वकर्मा बिचित्रानन्तचरित्रः, सर्वकामो निखिलभोग्यसंपन्नः। एतदेव दर्शयति सर्वगन्ध इत्यादिना। रूपादेरुपलक्षणमेतत्। सर्वमिदं गन्धादिकमभ्यात्तो नित्यं धारयन्नवस्थितः। भावक्तान्तादर्शआद्यचि पदसिद्धिः, भुक्ता ब्राह्मणा इतिवत्। अवाक्यः कार्त्स्न्येन वाचामगोचरः "कार्त्स्न्येन नाजोऽप्यभिधातुमीशे" इति वक्ष्यमाणत्वात्। नादरः स्वेतरेषु नमस्कारादिरहितः सर्वस्वामित्वात् "वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः" इत्यादि–श्रुतेः॥ ६० ॥

भगवतो भोक्तृत्वं पुनरप्याक्षिपति—नन्विति। विजिघत्सः क्षुद्रहितः अपिपासस्तृषारहितः तासां रसगन्धाद्यर्पणानां सेवानाम्। निराचष्टे— उच्यत इत्यादिना। तत्रेति श्रुतौ। तथा चेति। पौरुषे पुंस्त्वे। तद्वासनेति – पुंस्त्वप्रयुक्तकामिनीवांच्छाऽभावादित्यर्थः। ते नेति–ते क्षुत्पिपासे न स्त इत्यर्थः। ननु

स्मरविकारस्य पुंसो वनिताकटाक्ष इव तद्विकारप्रकाशः भक्तेच्छानुसारिणा सत्यसङ्कल्पेन तस्य ते प्रादुर्भवेताम् लोके तृप्तोऽपि प्रीत्यार्पितं भुञ्जानो दृश्यते। तस्माद्भक्तो यदेच्छति यद्यच्चार्पयति तदैव तदुपभुङ्क्ते तात्रतैवासौ तुष्यति नाधिकेन। "भक्तवत्सलो विष्णुः स्मृतिः सेवा स्ववेश्मनि। स्वभोज्यस्यार्पणं दानं फलमिन्द्रादिदुर्लभम्" इति स्मृतिश्च ॥ ६१ ॥

तदीयानि तु भक्ष्याणि स्वरूपशक्तिसिद्धरसात्मकान्येव। "श्रियः कान्ताः कान्तः परमपुरुषः कल्पतरवो, द्रुमा भूमिश्चिन्तामणिगणमयी तोयममृतम्। कथा गानं नाट्यं गमनमपि

---

ते बिना भोग्येषु कथमभिरुचिस्तत्राह–तस्मादित्यादि। भक्तेच्छैवेति। भोक्तृत्वशक्ति बिद्वान् भक्तो यदा भोग्यान्यर्पयितुमिच्छति तदैव ते स्यातामित्यर्थः। अत्र प्रमाणं–स्वेच्छेति–श्रीदशमे ब्रह्मवाक्यम्। स्वकीयानां भक्तानां इच्छा। तन्मयस्य तदधीनस्येत्यर्थः। प्राचुर्य्ये मयट्। ननु ताभ्यां विरहितस्य तस्य भक्तेच्छयैव ते कथं भवेतां तत्राह–भक्तेच्छा त्विति प्रीतिव्यवहारे लोकेऽप्यनुभूतमेतदित्याह– लोके इति। भक्त इति हरिप्रदीपे ॥ ६१ ॥

ननु भगवतो वास्तवीं भोक्तृत्वशक्ति जानद्भिर्भक्तैः प्रीत्यार्पितान्यन्नादीनि प्रीत्यैव भुञ्जाने तस्मिन् हेयांशसंभावना लोकवत प्राप्नोति, युक्ता च सा तानि भुञ्जाने तदंशसंभवात्। ज्ञानमूर्तौ नारायणादौ रसान् भुञ्जानेऽपि तदंशो न स्यात्, मनुष्य-



वंशी प्रियसखी, चिदानन्दं ज्योतिः परमपि तदास्वाद्यमपि च" इति ब्रह्मसंहितायाम्, "द्रव्यतत्त्वं शृणु ब्रह्मन् प्रवक्ष्यामि समासतः। सर्वभोगप्रदा यत्र पादपाः कल्पपादपाः। गन्धरूपं स्वादरूपं द्रव्यं पुष्पादिकं च यत्। हेयांशानामभावाच्च रसरूपं भवेच्च तत्। त्वग्बीजं चैव हेयांशं कठिनांशं च यद्भवेत्। सर्वं तद्भौतिकं विद्धि न ह्यद्भुतमयं हि तत्। रसवद्भौतिकं द्रव्यमत्र स्याद्रसरूपकम्" इति हयशीर्षपञ्चरात्रे च तथैव प्रतीतेः ॥६२॥

---

मूर्त्तौ कृष्णादौ तु स्यादेव सः। एवं धार्ष्ट्यान्युशतीत्यादिना तत्र तदुक्तेश्चेत्याशङ्कायां तद्भोग्यानामलौकिकत्वं प्रदर्शयन्नाह–तदीयानि त्वित्यादिना। श्रिय इति—कान्ताः स्त्रियः ताः श्रिय एव "लक्ष्मीसहस्रशतसंभ्रमसेव्यमानमिति" पूर्वमुक्तेः। अत एव कान्तास्ता ब्रजदेव्योऽवगताः, तासां सर्वासां कान्तः पतिः परमपुरुषो गोपलीलः कृष्ण एवावगतः। कल्पतरुत्वात्तत्र द्रुमाः सर्वाभीष्टप्रदा विदिताः। भूमिरित्यादि तद्वत्। चिदानन्दं परं वस्त्वेव यत्र ज्योतिश्चन्द्रसूर्यादि, तदास्वाद्यं तासां तस्य च भोग्यं रसगन्धादिकमपि चिदानन्दमेव तत्स्वरूपशक्तिविभवत्वात्। द्रव्यतत्त्वमिति विकसितार्थम। 'नित्यावतारो भगवान्नित्यमूर्त्तिर्जगत्पतिः। नित्यरूपो नित्यगन्धो नित्यैश्वर्यसुखानुभूः' इति बृहद्वैष्णवे चैवम्। नित्यत्वादेव तानि भोग्यानि भोक्तृकार्येषु प्रसादकराणि निमज्जन्त्येव न तु जीर्यन्ति, पुष्पाणि वासांसि चोत्तीर्णानि पुनः स्वाधारं भजन्ति, न तु पर्युषितानि नश्यन्ति वा। "पूर्णे संवत्सरे देवि पुष्पमेतत्त्वावान्तकात्।

रसानां भक्ष्याकारत्वमलौकिकत्वसिद्धं सच्चिदानन्दानां विग्रहत्ववत् । तादृशानि च तानि रूपादिवद्भोग्यानीति न हेयांशयोगसम्भावना । न च नृलिङ्गं ब्रह्म भजतां काचिच्छङ्का तेषामपि तादृशत्वेन तदनुदयात् । एवमेव स्वीकृतं तज्ज्ञैः—"श्रूयते परिमले मलशब्दो मेखलादिषु खलाद्यभियोगः । चन्दनादिरस एव हि पङ्को नीविकेशरशनादिषु बन्धः । ६३ ॥

---

निर्वत्स्यते तरुवरं समयेन प्रयास्यति" इति पारिजातपुष्पे तथात्वलिङ्गात् । श्रीहरिवंशे पारिजातकुसुमं सर्वान्मनारथान् ददात्येतद्वर्षानन्तरं पारिजाततरुमेव प्रयास्यतीति नारदेन भैष्मीं प्रत्युक्तं द्रष्टव्यम ॥ ६२ ॥

ननु भोग्यानां रसरूपत्वे चर्व्यचोष्यादिभावस्तेषां न स्यात्तत्राह रसानामिति । भक्ष्याकारत्वमोदकव्यञ्जनादिरूपत्वं, तादृशानि रसात्मकानि तानि भक्ष्याणि । रुपादिबदिति—न हि रूपस्पर्शादीनां भुक्तानां हेयांशः संभाव्यत इत्यर्थः । न चेति - नृलिङ्गं मनुष्याकृति कृष्णादिं भजतां नन्दादीनां काचिच्छङ्का - असकृद्भुञ्जानस्य कृष्णादेर्लोकवत् कुतो न हेयांशप्रतीतिरिति वितर्को न भवतीत्यर्थः । "शङ्का त्रासे वितर्के च" इति विश्वः । तेषामपीति—तेषां नन्दादीनां चिदानन्दबिग्रहाणां रसात्मकानि भोग्यानि भुञ्जानानां तादृशत्वेन हेयांशयोगित्वेन तदनुदयात् कृष्णादौ तस्याः शङ्कायाः असंभवादित्यर्थः । अत्र विद्वदनुभवं प्रमाणयति-एवमेवेति । तज्ज्ञैः कविकर्णपूरैर्महानुभावैरित्यर्थः । श्रूयते इति-नन्दनृपराजधान्यामिति बोध्यम् । स्फुटार्थं पद्यम् ।



"एवं धार्ष्ट्यान्युशति कुरुते मेहनादीनि वास्तौ स्तेयोपायैर्विरचितकृतिः सुप्रतीको यथाऽऽस्ते" इत्यत्र वास्तौ मेहनादीनि जलनिषेकपांशुप्रक्षेपादीनि धार्ष्ट्यानि कुरुते इत्येवार्थः । यद्वा अमेति सहार्थेऽव्ययं अमा सह वसतोऽस्यां चन्द्रार्कावित्यमावस्यापदव्युत्पत्तौ दृष्टत्वात् "अमा सह समीपे च" इति नानार्थवर्गाच्च । स्तेयोपायैरमा सहधार्ष्ट्यानि कुरुते । कीदृशि नादीनि कण्ठादिनादवन्तीत्यर्थः ॥ ६४ ॥

---

कृष्णादेश्चिन्मूर्त्तित्वं सर्वदेवाभ्यर्च्यत्वं सर्वाभिमतम, देवेष्वपि हेयांशाभावात्तादृशे तत्र क तदंशः । तथापि तस्मिंस्तत्संभावना तत्स्वरुपापरिज्ञानाद्विद्वेषाद्वेति स्थितम । तथा च हेयांशाभावाच्च निर्मलं समस्तहेयरहितं विष्णवाख्यं परमं पदमिति वैष्णवोक्तं स्वरूपं कृष्णादेः सिद्धम ॥६३॥

ननु तस्मिन् हेयांशयोगं प्रत्याययद्वाक्यं दृष्टं तस्य का गतिरिति चेत्तत्राह-एवमिति । हे उशति कमनीये यशोदे राज्ञि तव सुतोऽस्मद्वास्तौ एवं धार्ष्ट्यानि कुरुते । कानीति चेत्तत्राह-मेहनादीनि अम्बुनिषेकधूलिनिक्षेपादीनीत्यर्थः । अम्बुनिषेकमेवप्रवृत्तिनिमित्तं कृत्वा मिहधातोर्मेघशब्दनिष्पत्तेरिति भावः । न चाप्रयुक्तत्वं दोषः, साहित्यरीतिकूपाम्बुनोऽत्र वेदान्तव्युत्पत्तिपीयूषसिन्धावनादरणीयत्वात् । कीदृशः स्तेयोपायैः पीठकोलूखलादियोजनैर्विरचितकृतिः प्रकाशितचौर्य्यपाण्डित्यः । अधुना त्वदग्रे सुप्रतीकः साधुर्यथास्ते—व्याख्यान्तरमाह-यद्वेति—अमेति "अमावास्यदन्यतरस्याम्" इति सूत्रेऽमाशब्दस्य सहार्थत्वप्रतीते-

एवमृषभे भगवति या हेयांशयोगोक्तिः तत्त्वज्ञप्रतीतानुवाद एव। तत्प्रत्येतॄणां 'देवमायाविमोहिताः' इति विशेषणात्। "इदं शरीरं मम दुर्विभाव्यं तत्त्वं हि मे हृदयं यत्र धर्मः। पृष्ठे कृतो मे यदधर्म आरादतो हि मामृषभं प्राहुर्य्याः" इति तन्मूर्त्तौ परतत्त्वं रूपत्वं तेनैव कण्ठतोऽभिहितम्। नहि तादृशे तस्मिन्नसौ संभवेत् तत्सेविनां जीवानां च सिद्धानामतद्योगः स्मर्यते "जगज्जनमलध्वंभिश्रवणस्मृतिकीर्तनाः ॥ मलमूत्रादिरहिताः पुण्यश्लोका इति स्मृताः" इति ॥६५॥

---

रित्यर्थः। एवं पदानि भङ्क्त्वा बाक्यान्बयं योजयति—स्तेयोपायैरिति। नादीनीति। मित्राण्याक्रोष्टुं कोकिलमयूरध्बनिवन्तीत्यर्थः। इदं व्याख्यानं वैष्णबतोषण्यां च दृष्टम् ॥६४॥

नन्वेबमित्यादिबाक्यस्य साहित्यचातुर्य्येण पदभङ्गेनान्यथा व्याख्यानं न चारु, ऋषभचरितस्य तत्प्रतीतार्थोज्जीबकत्बादिति चेत्तात्रापि तथा प्रतीतिर्भ्रान्तिरिति योजयति एबमित्यादिना। तत्र ताबत्ताद्विग्रहस्य परबस्तुतामाह·इदमिति। दुर्बिभाव्यं मनसाप्यबितर्क्यं यत्तात्वं परमात्मबस्तु तन्ममेदं शरीरमेब। मे हृदयमिति–ऋषभं श्रेष्ठं वेदोक्तधर्मपालनात्ताद्विरोधिनिराकरणाच्च ऋषभनामाऽहमित्यर्थः। "ऋषभः श्रेष्ठवृषयोः" इति श्रीधरः। असौ हेयांशयोगः। अत्र कैमुत्यं दर्शयित्वाह–तत्सेविनामिति। पुण्यश्लोकाः शुकादयः ॥६५॥



तस्मादेवमत्र व्याख्येयं–प्राणिकर्मानुरूपफलप्रदो भगवान् "नायं देहो देहभाजाम्" इत्यादिस्वोक्त्युपदिष्टधर्मनिष्ठान् शिष्टान प्रति परतत्त्वमूर्तित्वेनावगतः प्रयच्छति तेभ्यस्तदभीष्टानि, तदुपदिष्टधर्मभ्रष्टान् पामरान् प्रति तु हेयांशयोगितया प्रतीतस्तांस्तत्क्रियानुगुणनरकं प्रापयतीति "मद्धर्मविमुखा मामीदृशं प्रतियन्त्वाचरन्तु च तथा" इति तत्कामे सति तन्मायैव तथा भासयति ॥६६॥

हेयस्याप्यहेयतयाऽवभासनं तादृशाचारजिग्राहयिषयैवेति मन्तव्यम्। इतरथा स्वधर्मदेशिकत्वेन तस्मिन्नास्था न स्यात्। यो ह्यधर्मो भगवता पृष्ठे कृतः स एवैष वैदिकशौचादिविरहदेवद्विजयज्ञाद्यवज्ञामयस्तैर्गृहीत इति

---

तस्मादिति – ऋषभस्य परवस्तुत्वादित्यर्थः। पामरानर्हत्प्रभृतीन्। तत्क्रियेति – मलिनाचरणानुरूपम्, तत्कामे सति भगवदिच्छायां जातायामित्यर्थः ॥ ६६ ॥

पुरीषमुत्सृज्यातिसुगन्धिनि तस्मिन् पशुवदृषभो व्यचेष्टतेति यदर्हदादिषु तस्य चेष्टावभानं तत् किमर्थमिति चेत्तात्राह हेयस्यापीति। पार्थिवादिरूपं भक्ष्यं पुरिषादिरूपेण परिणमते न हि तयोः किञ्चिदन्तरमिति। तत्र तत्र समदृष्टिः सोऽस्मदुपजीव्यऋषभोऽभूदिति हेयेऽप्यहेयत्वावभासनं तत्पुरीषं बहुयोजनानि सुरभीणि व्यधादिति तस्मिन् सौरभ्यावभासनं चेत्यर्थः। तादृशाचारेति – नरकनिपातहेतुर्यस्तत्र समदृष्टित्वविधानलक्षणऋषभाचरितभ्रमादाचारस्तं ग्राहयितुमित्यर्थः। इतर-

मुनिः स्फुटयति—"यस्य किलानुचरितमुपाकर्ण्य कोङ्क-वेङ्कुटकानां राजाऽर्हन्नामोपशिक्ष्य कलावधर्मः" इत्यादिना। तस्मादार्हतान् पाषण्डनः प्रति मायये‌दं हेयांशभासनं न च परमाप्ते भगवति वैषम्यं कर्मानुसारिणि तस्मिंस्तदसंभवात् ॥ ६७ ॥

एवं सति "तेन सह दावानलस्तद्वनं ददाह" इत्यत्र तु कर्तृसाहित्यमेव न तु कर्मसाहित्यं स्वीकर्तव्यम्, दावानलो वनं ददाह ऋषभस्तु तद्वासिनामविद्यामिति। यत्त्वृषभस्य विष्णोः "एवमनुशास्यात्मजान्" इत्यादिभिः परमहंसधर्मानुष्ठानमुक्तं तत् खलु तदनुकरणरूपमेव तथैव प्रतीतेः। सांपरायविधिरपि प्रातीतिक एव तावतैव तदा-

---

थेति – ऋषभस्य तत्र तत्रोपादेयहेयभावत्यागेन समदृष्टित्वाभावे तस्य पुरीषे तादृक्सौरभ्यभरे चानवभाते सतीत्यर्थः। आस्था दृढविश्वासः, तैरर्हदादिभिः, मुनिः श्रीशुकः। यस्येति पञ्चमे। यस्य ऋषभस्य उपाकर्ण्य श्रुत्वैव न तु वीक्ष्य। तस्मादार्हतानिति। श्रुतिबाह्यलिङ्गधारणं पाषण्डं तद्विद्यते येषां ते पाषण्डिन इति मिताक्षरा याम ॥६७॥

भ्रमान्तरं निरस्यन्नाह—एवमिति। ऋषभस्य परतत्त्वत्वे निर्णीते सतीत्यर्थः। कर्तृसाहित्यं दाहे कर्त्रानलेन सहभावः न तु कर्मसाहित्यमिति। कर्मणा वनेन सहभावो न स्वीकार्यः। परतत्त्वस्यादाह्यत्वादिति भाव। नन्वृषभः किं तत्र ददाह तत्राह—ऋषभस्त्विवति। यत्त्विति। तदनुकरणरूपं लोकशिक्षा-



वेशपरित्त्वयात्। तस्मात् सुष्ठूक्तं हेयांशयोगोक्तिरज्ञप्रतीतानुवादरुपैवेति। तस्मात् स्वज्ञानपूर्वकं भगवज्ज्ञानमेवात्यन्तिकदुःखनिवृत्तिसुखप्राप्त्युपायभूतं भवति नापरं किञ्चिदस्ति ॥ ६८ ॥

इति सिद्धान्तरत्नाख्यभाष्यपीठके परमपुमर्थोपायनिर्णयः प्रथमः पादः।



## ❀ द्वितियः पाद ❀



अथैश्वर्य्यरूपा माधुर्य्यरूपा चेति भगवत्ताया द्वैविध्यात्तद्विषययोर्ज्ञानभक्त्योर्द्वैविध्यं प्रदर्श्यते। तत्रैश्वर्य्यं नरलीलामनपेक्ष्य पारमैश्वर्य्याविर्भावः। यथा पितरौ प्रत्यैश्वर्य्यं प्रदर्श्य "एतद्वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे।

---

र्थमित्यर्थः। तथैव तत्प्रकरणेऽवगमात्। सांपरायविधिर्देहत्यागप्रकारः। तावतैवेति – प्रातीतिकेन तादृशानां देहत्यागेन शुश्रूषूणां नृणां देहावेशत्यागादित्यर्थः। प्रकरणमुपसंहरति—तस्मादिति। पञ्चमे ऋषभप्रकरणं वीक्ष्येदं विमृश्यम् ॥

इति श्रीगोविन्दभाष्यपीठकटिप्पण्यां प्रथमः पाञ्चजन्यपादो व्याख्यातः।

नान्यथा मद्भवं ज्ञानं मर्त्यलिङ्गेन जायते" इति, यथा चार्जुनं प्रति-"पश्य मे योगमैश्वरम्" इति । माधुर्य्यन्तु पारमैश्वर्य्यस्य प्रकाशने चाप्रकाशने च नरलीलाऽनतिक्रमः। यथा पूतनाप्राणहर्त्त्वे स्तनचूषणरूपनरबालकचेष्टत्वम् , यथा चातिकठोरशकटोत्पातनेऽप्यतिकोमलाङ्घ्रिदलहतिसिद्धत्वम्, अतिदीर्घदामाशक्यबन्धेऽपि मातृभीतिवैक्लव्यम्, ब्रह्मादिमोहनेऽप्यतिसार्वज्ञेऽपि वत्सचारणलीलत्वम्, पारमैश्वर्य्ये सत्यपि तस्याप्रकाशनेन दधिपयः स्तेयव्रजस्त्रीजनलोलुपत्वादि ॥१॥

अथैश्वर्यज्ञानं पारमैश्वर्य्यानुसन्धौ सति हृत्कम्पहेतुना सादरसम्भ्रमेण स्वभावशैथिल्यकृद्धर्मविशेषः यथा "युवां न नः सुतौ साक्षात् प्रधानपुरुषेश्वरौ" इति, यथा

---

अथ भगवत्प्राप्तौ साक्षात्साधनभावेनोक्तयोर्ज्ञानभक्त्योरैश्वर्य्यमाधुर्य्यविषयतया द्वैविध्यं वक्तुमारभते-अथेत्यादिना। नानाशङ्काश्मसञ्चूर्णनादस्य पादस्य कौमोदकीति संज्ञा सद्भिरुच्यते । एवञ्चामिति । श्रीदशमे भगवद्वाक्यम् । एतच्चतुर्भुजमैश्वरं मद्भवं पूर्वदृष्टमद्विषयं । मर्त्यलिङ्गेन मनुष्यसन्निवेशेन रूपेण इति शब्दानन्तरमशक्तमिति शेषः । एवमग्रेऽपि ॥१॥

ज्ञेयमुक्त्वा ज्ञानमाह--अथेति । युवामिति - श्रीदशमे वसुदेववाक्यम् । युवां रामकृष्णौ भ्रातरौ। सखेति - श्री-



च "सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति । अजानता महिमानं तवेदं मया प्रमादात् प्रणयेन वापि ॥ यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु । एकोऽथवाप्यच्युत तत्समक्षं तत् क्षामये त्वामहमप्रमेयम्" इति । इह वात्सल्यसख्यात्मकस्वभावशैथिल्यम् । माधुर्यज्ञानन्तु पारमैश्वर्य्यानुसन्धाऽपि हृत्कम्पहेतुसम्भ्रमलवस्याप्यनुदयात् स्वभावातिरथैर्य्यकृद्धर्मविशेषः । यथा "त्रय्या चोपनिषद्भिश्च साङ्ख्ययोगैश्च सात्वतैः । उपगीयमानमाहात्म्यं हरिं साऽमन्यतात्मजम्" "वन्दिनस्तमुपदेवगणा ये गीतवाद्यबलिभिः परिवव्रुः । वन्द्यमानचरणः पथि वृद्धैः" इत्यादि । इह पारमैश्वर्य्यानुसन्धानेऽपि वात्सल्योज्ज्वलाख्यस्वभावाशैथिल्यम् ॥२॥

---

गीतास्वर्जुनवाक्यम् । प्रसभं हठात् । क्षामये क्षमयामि । इहेति-युवां न न इत्यत्र पितुर्वात्सल्यशैथिल्यम्, सखेतीत्यत्रार्जुनस्य सख्युः सख्यशैथिल्यम् । त्रय्येति श्रीदशमे शुकवाक्यम् । सा श्रीयशोदा । वन्दिन इत्यादिकं -तत्रैव श्रीयशोदां प्रति व्रजदेवीनां वाक्यम् । वृद्धैर्ब्रह्मादिभिः । इहेति—कृष्णैश्वर्य्यं विज्ञायापि तत्र श्रीयशोदाया वात्सल्यं शिथिलं नाभूदपि तु दृढमेव जातम् । कान्तस्यैश्वर्य्यं विज्ञायापि तासां तत्र कान्तभावो न शिथिलोऽपि तु दृढ एवासीदित्यर्थः ॥ २ ॥

माधुर्य्यनिष्ठानामैश्वर्य्यज्ञानं त्रिवेण्यां सारस्वतप्रवाहवद् गौणतयाऽस्ति । हृत्कम्पहेतोः सादरसम्भ्रमस्याभावात् । न च तद् भावसङ्कोचकृत् प्रत्युत तत्पोष्येव । मत्सुतो मत्सखो मत्प्रियो वा सर्वेश्वर इत्युल्लाससम्भवात् । लोकेऽपि यथा स्वपुत्रस्य स्वसखस्य स्वकान्तस्य वा पृथिवीश्वरत्वे सति तस्मिन् बात्सल्यादेः पुष्टिर्भवेत्तथैतद्द्रष्टव्यम् । विस्मये विरहे विपदि च तस्योदयः पर्वणि सारस्वतस्येव प्रवाहस्य ॥३॥

भगवद्भक्तेष्ववरा व्रजस्था: भगबत्तात्त्वाज्ञानात्, तथापि बन्हिस्पर्शेन दाह इव बस्तुमहिम्ना तेषां मोक्षस्त्वभूदिति केचिद्‌ज्ञा मन्यन्ते, तान्निरस्यन्नाह-माधुर्य्येत्यादि । ननु माधुर्य्यनिष्ठानां व्रजस्थानां यद्येषामैश्वर्य्यज्ञानं स्वीकृतं तर्हि तन्माधुर्य्यभावमपनेष्यतीति चेत्तत्राह-न च तदिति । तदैश्वर्य्यक्षानम् । ननु क्वैषामैश्वर्य्यज्ञानं दृष्टम्-तत्राह बिस्मय इत्यादि । यथा कृष्णास्यदृष्टबिश्वाया व्रजेश्वर्य्या बिस्मये स्वभावसिद्धे दृशमहिमाशाली परेशोऽयमिति ज्ञानमुदभूत् । यथा च बरुणकृतायां पूजायां श्रुतायामयं परमेश्वर इति व्रजौकसां ज्ञानमुदगात् । बिरहे चेति-'मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः । बाचोऽभिधायिनीर्नाम्नां कायस्तत्-प्रह्वणादिषु' इति तेषामेव तदैश्वर्य्यबोधक.बचनम । मृगयुरिवेत्यादि च श्रीराधादीनां तादृशं बचनम् । बिपदि चेति-इन्द्रादिहेतुकायां बिपत्तौ सर्वेषां तदैश्वर्य्यबोधिका बाक् प्रसिद्धेति, श्रीदशमे द्रष्टव्यमेतत् ॥३॥



ऐश्वर्य्यवन्माधुर्य्यस्यापि ब्रह्मधर्मत्वात्तद्‌विषयकमपि ज्ञानं ब्रह्मज्ञानमेव सहस्रशीर्षत्वादिवद् द्विभुजत्वादेरपि ब्रह्मधर्मत्वं श्रुतिस्मृतिभ्यः सिद्धम् । "सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम् । द्विभुजं मौनमुद्राढ्यं बनमालिनमीश्वरम्", "यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते । यत्रावतीर्णं कृष्णाख्यं परं ब्रह्म नराकृति", "गूढ़ं परं ब्रह्म मनुष्यलिङ्गम्" इत्यादिभ्यः । एवञ्चोभयज्ञानसत्त्वाद् ब्रह्मोद्धवादिवन्द्यपादरजस्त्वं माधुर्य्यज्ञानवतां स्मर्य्यते ॥४॥

नन्वैश्वर्य्यं भगवतो वास्तबमीश्वरस्वरूपानुबन्धित्वात् माधुर्य्यन्तु न बास्तवं मनुष्यानुपहाय मायया मनुष्यदेहतच्चेष्टयोर्धारणात्, अत उक्तं "मायामनुष्यस्य बदस्व बिद्वन्""लीलामानुषबिग्रहः" इत्यादि । तस्मान्माधुर्यज्ञानबतामबरत्वमिति चेत्तात्राह-ऐश्वर्य्यबदिति । तद्विषयकं माधुर्य्यसम्बन्धि । सत्पुण्डरीकेति-श्रीगोपालपूर्वतापन्याम् । अत्र कृष्णस्य माधुर्य्यमीश्वरत्वेऽपि सति मनुष्यसन्निवेशतद्विचेष्टयोरुक्तेः प्रतीतम् । यदोरिति-श्रीवैष्णवे । गूढमिति श्रीभागबते । ब्रह्मोद्धबादीति—'तद्‌भूरिभाग्यमिह जन्म किमप्यटव्यां यद्‌गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकम् । यज्जीबितं तु निखिलं भगवान् मुकुन्दस्त्वद्यापि यत् पदरजः श्रुतिमृग्यमेव' इति ब्रह्मणो बाक्यम् । 'आसामहो चरणरेणुजुषामहं स्यां वृन्दाबने किमपि गुल्मलतौषधीनाम्' इत्यादिकमुद्धबस्य च । 'मायामनुष्यस्य' इत्यत्र मायया पराख्यया स्वरूपशक्त्या मनुष्यस्य नित्यं मनुष्यसन्निवेशिन इत्यर्थः । "स्वरूपभूतया नित्यशक्त्या मायाख्यया युतः । अतो मायामयं बिष्णुं

यत्तु "यदैश्यज्ञानशून्यत्वादेषां रागे प्रधानता" इत्युपजीव्यैरभिहितं तत् किल हृत्कम्पहेतुसादरसम्भ्रमाजनकत्वादिति बोध्यम्। न त्वैश्वर्य्यज्ञानमात्राभावात् तज्ज्ञानस्य दर्शितत्वात् ॥५॥

---

प्रवदन्ति सनातनम्' इति श्रुतेः, 'त्रिगुणात्मिकाथ ज्ञानं तथा चिच्छक्तिरेव च। मायाशब्देन भण्यन्ते शब्दतत्त्वार्थवेदिभिः' इति शब्दमहोदधेश्च, 'माया वयूनं ज्ञानम्' इति निघण्टुकोशाच्च। न हि मनुष्याकारः स्वर्णपिण्डो मनुष्यः, अन्यथा सच्चिदानन्दविग्रहत्वश्रुतिर्व्याकुप्येत्। एतेनैव लीलेति व्याख्यातम् ॥४॥

नन्वेवं व्रजौकसामुभयज्ञानवत्त्वेन चेद् भक्तवर्य्यत्वं सिद्धं तर्हि भगवदुपजीव्यैः श्रीरूपचरणैस्तेषामैश्वर्यज्ञानं कुतो निषिद्धम? तत्राह यत्त्विति। हृत्कम्पेति - तदैश्वर्यज्ञानस्येति बोध्यम्। अयमर्थः- व्रजौकसां रागात्मिका भक्तिः तल्लक्षणं च तैरुक्तम्-"इष्टे स्वारसिकी रागः परमाविष्टता भवेत्। तन्मयी या भवेद् भक्तिः साऽत्र रागात्मिकोदिता" इति। अस्यार्थः-इष्टे स्वानुकूल्यविषये वस्तुनि स्वारसिकी स्वाभाविकी या परमाविष्टता तस्याः हेतुः पितृत्वादिसम्बन्धप्रधाना प्रेममयी तृष्णा स रागो भवेत्। तदाधिक्यहेतुतया तदभेदोक्तिरायुर्घृतमितिवद् बोध्या। तन्मयी तदेकप्रवर्त्तिता भक्तिरत्र रागात्मिका कथ्यते। तत्प्रकृतवचने मयडिति। अस्यां सत्यां तत्सेवायां निःसम्भ्रमा प्रवृत्तिः, या व्रजौकसां श्रीदशमादौ दृश्यते। यत्राश्लेषादयो निःसङ्कोचाः प्रवृत्ताः प्रभुरयमिति ज्ञानाच्चेतसि सादरः कम्पः सम्भ्रमः कथ्यते। सर्वेश्वरोऽयं कृष्ण इति ज्ञानं विद्यमानमपि तादृश्या रागानुगायाऽन्तर्निगीर्णत्वात् प्रभवितुमशक्नुवत् संभ्रमं न जनयतीति तदजनकत्वादेव तत्रास्तीति तैर्नि-



तच्च "अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः", "सर्पो मा ग्रसते तात प्रपन्नं परिमोचय। दावाग्निना दह्यमानान् प्रपन्नांस्त्रातुमर्हथः" "मृगयुरिव कपीन्द्रं विव्यधे ऽलुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम्। बलिमपि बलिमत्त्वाऽवेष्टयद् ध्वाङ्क्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः" "वरदेश्वर मा स्म च्छिन्द्याः" इत्यादितद्वाक्यात्। किन्तु तत्तज्ज्ञानानि क्रमेणोदयन्ते, युगपत् सर्वायोगात्तथैव रसपोषाच्च। नाऽप्यनुदितमसत् "पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्" इति न्यायात्। भगवतोऽपि मिहिरप्रकाशन्यायेन निरन्तरप्रततज्ञानस्य मनुष्यलीलोपयोगिसंमुग्धत्वं वीक्ष्यते "तदभिज्ञो-

---

षिद्धं न तु सर्वथा नास्तीत्यभिमतं कृष्णविषयकस्यैश्वर्य्यज्ञानस्य श्रीदशमादिषु वर्णितत्वादिति। मथुराद्यौकसान्तु तादृश्यास्तस्या अभावेनैश्वर्य्यज्ञानस्य प्रभुत्वात्तं कम्पं जनयतीति गौणी तेषां रागात्मिकेति व्याख्यातारः ॥५॥

व्रजौकसामैश्वर्यज्ञानं प्रमाणयति--अथो इत्यादिना। श्रीदशमस्याष्टमे हरेर्मृद्भक्षणचरित्रं वर्णितम्। तत्रैकदेत्यादिभिस्तत्सखैस्तन्मृद्भक्षणं तन्मातरि सूचितम्। तया च गृहीतकरं स उपालब्धस्तस्य मातृतो भयं सखिवचसां मिथ्यात्वोक्तिपूर्वकं स्वमुखव्यादानं मात्राहं ताड्यमानो न स्यामिति तद्विस्मयाय स्वसङ्कल्पानुगया स्वैश्वर्य्यशक्त्या स्वास्ये विश्वप्रदर्शनम्। तत्र वहिःस्थितमेव विश्वं पतिपुत्रसहितमात्मानं व्रजञ्च तदास्यमध्ये पश्यन्त्या मातुः

ऽपि भगवान् सर्वात्मा सर्वदर्शनः । प्रश्रयावनतोऽपृच्छद् वृद्धान्नन्दपुरोगमान् । ततो वत्सान्" इत्यादौ । तच्च स्वचिच्छक्तिसाररूपलीलानन्दात्मकं स्वरूपानतिरेकि मन्तव्यम् । इतरस्य तस्मिन्नभावात्—"अष्टादशमहादोषै रहिता भगवत्तनुः । सर्वैश्वर्यमयी सत्यविज्ञानानन्दरूपिणी" इति स्मृतेः । महादोषाश्च ते–"मोहस्तन्द्रा भ्रमो रूक्षरसता काम उल्बणः । लोलता मदमात्सर्ये हिंसाखेदपरिश्रमाः ॥ असत्यं क्रोध आकाङ्क्षा आशङ्का विश्वविभ्रमः । विषमत्वं परापेक्षा दोषा अष्टादशोदिताः" इति ॥६॥

कथमेतत् सम्भवेदिति संशयरूपा शङ्का तस्याः 'किं स्वप्न एतदुत देवमाया किं वा मदीयो वत बुद्धिमोहः' इत्यर्द्धकेन प्रतिपादनम् । 'अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः' इत्यर्द्धकेन तु मत्पुत्रस्य परेशत्वात्तस्यैवायं स्वाभाविको धर्म इदानीं मत्प्रत्यक्षोऽभूदिति स्थापनम् । माधुर्य्यानुबन्धिनो हरेर्धर्मा व्रजौकसां सदैव प्रत्यक्षा ऐश्वर्य्यानुबन्धिनस्तु ते तस्मिन् सत्त्वेन ज्ञाता एव कदाचिदेव प्रत्यक्षी भवन्तीति तत्त्वविदां राद्धान्तः । 'अथो यथावन्न वितर्कगोचरं चेतोमनःकर्मवचोभिरञ्जसा' इत्यर्द्धकेन मदर्भकस्य नारायणाख्यस्वांश—पुरुषद्वाराऽयमाश्चर्य्यदर्शनलक्षणोऽवितर्क्यो धर्मः प्रत्यक्ष इति निरूपणम् । ततो 'यदाश्रयं येन यतः प्रतीयते सुदुर्विभाव्यं प्रणतास्मि तत्पदम्' इत्यर्द्धकेन चित्ताप्रभृतिभिर्वितर्कगोचरं न भवति । यदाश्चर्य्यदर्शनं यदाश्रयं यदधिष्ठानकं यत इति पदस्योत्पत्तिहेतुः येनेति पदस्य प्रतीतिहेतुस्तत्पदं पुरु–



षांशरूपं वस्तु तस्मिन् धर्मे संशयं निराचिकीर्षुरहं प्रणताऽस्मि । कृष्णो मत्पुत्रो मे लालनीयस्तत्स्वांशपुरुषस्तु पूज्य इत्यस्मद्भक्तिपद्धतिः । यः स्वांशिनः कृष्णस्य मत्पुत्रस्य मत्तो भयमपनिनीषुस्तदास्ये तादृशं विश्वं प्रदर्श्य मां विस्मापयते स प्रसीदन्मे तद्धर्मे शङ्कामपनयतादित्यर्थः । "अहं ममासौ पतिरेष मे सुतो व्रजेश्वरस्याखिलवित्तपा सती । गोप्यश्च गोपाः सह गोधनाश्च मे" इति त्रिपादेन तच्छङ्काप्रणाशपूर्वकं निजभावदार्ढ्यदर्शनम् । 'यन्माययेत्थं कुमतिः स मे गतिः' इति चतुर्थपादेन तु यस्य मत्पुत्रस्वांशस्य पुरुषस्य मायया ममेत्थं किं स्वप्न इत्याद्युक्ता संशयरूपा कुमतिः स मे गतिस्तादृशसंशयतरणे समाश्रयोऽस्त्विति पुनस्तदनुदयाभ्यर्थनम् । "इत्थं विदिततत्त्वायां गोपिकायां स ईश्वरः । वैष्णवीं व्यतनोन्मायां पुत्रस्नेहमयीं विभुः" इत्येकेन तु मत्स्वरूपं विज्ञाय मन्माता मे लालने शिथिला माभूदिति माधुर्यानुयोगिकृपावर्णनम् । 'सद्यो नष्टस्मृतिर्गोपी सारोप्यारोहमात्मजम् । प्रवृद्धस्नेहकलिलहृदयाऽऽसीद्यथा पुरा' इत्येकेन तु विस्मयदर्शनानुसन्धेः स्मृतेस्तिरोधानात्मा नाशस्ततः पुत्रलालनमिति । एवमन्यच्च व्याख्येयम् । एवं श्रीयशोदायाः कृष्णैश्वर्य्यज्ञानं प्रदर्श्य श्रीराधायास्तद्दर्शयति—मृगयुरिति—श्रीदशमे भ्रमरमुद्दिश्य तस्या वाक्यम् । हे मधुप स कृष्णः पुरापि रामः सन् मृगयुर्व्याध इव कपीन्द्रं बालिनं विव्यधे मारितवान् । अलुब्धधर्मा व्याधधर्मेण रहितः । न हि व्याधः कपिं हन्यात्तन्मांसस्याऽभक्षणीयत्वात् । स्वयं स्त्रीजितः सीताऽनुरक्तोऽपि कामयानां स्पृहावतीं स्त्रियं शूर्पणखां विरूपां छिन्ननासाकर्णामकृत । पुरा वामनः सन् बलिना दत्तां बलिं त्रैलोक्योपहारमत्त्वा गृहीत्वाऽपि बलिमवेष्टयद् बबन्ध । ध्वाङ्क्षवदिति – काको यथा बलिमत्त्वा-

ऽपि तद्दातारं वेष्टयति तद्वदित्यर्थः । तस्मादसितस्य श्यामस्य सख्यैरलम् । तर्हि तूष्णीमास्व इति चेत्तत्राह-तत्कथारूपोऽर्थस्तु दुस्त्यज इति । इह श्रीयशोदायाः श्रीराधायाश्चैश्वर्यज्ञानं विस्फुटम् । बरदेति—सर्वासां प्रेयसीनाम् । अत्र 'धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः । यान् ब्रह्मेशो रमादेवी दधुर्मूर्ध्न्यघनुत्तये' इति ग्राह्यम् । ब्रह्मादिवन्द्यत्वेन तज्ज्ञानन्तु सर्वेषां ब्रजौकसां तुल्यम् । किन्त्विति—तत्तज्ज्ञानान्यैश्वर्यमाधुर्यविषयाणि । युगपदिति-एकदाऽनेकज्ञानाऽसंभवादित्यर्थः । नन्वत्यवधानिनां युगपदनेकज्ञानं प्रतीतम् तत्राह-तथैवेति । क्रमेण तत्तज्ज्ञानोदये सतीत्यर्थः । अत्यवधानेऽप्यन्तरालेऽतिसूक्ष्मः कालोऽस्त्येव, तदप्रतीतिस्त्वतिसौक्ष्म्यादित्याहुः । ननु माधुर्य्यज्ञानकाले तेषामैश्वर्य्यज्ञानं ध्वस्तमिति चेत्तत्राह—नापीति । पुंस्त्वादिवदिति ब्रह्मसूत्रम् । सुषुप्तौ सत एव ज्ञानस्य जागरेऽभिव्यक्तिः, यथा बाल्ये सत एव पुंस्त्वादेः कैशोरेऽभिव्यक्तिस्तद्वत् । अन्यथा क्लीवस्यापि तदापत्तिः । माधुर्य्यस्य ब्रह्मस्वरूपानुबन्धित्वात्तद्विषयकं ज्ञानं ब्रह्मज्ञानमित्युक्तम् । अथ माधुर्य्याङ्गभूतं मौग्ध्यादि तत्रोपपद्यते भगवतोऽपीत्यादिना । संमुग्धत्वमसर्वज्ञत्वम । तदिति श्रीदशमे शुकवाक्यम् । तदभिज्ञः शक्रपूजोद्यमविदिति प्रततज्ञानत्वम् । प्रश्रयेति संमुग्धत्वम् । नन्वेतत् संमुग्धत्वानुकरणे न तु संमुग्धत्वे प्रमाणमिति चेत्तत्राह-ततो बत्सानित्यादि । तत्रेति संमुग्धत्वम् । न चास्य स्वरूपानतिरेकित्वे स्वीकृते ब्रह्मस्वरूपमज्ञानशबलं स्वीकृतमिति भ्रमितव्यम् । नखरुचिकुराद्यङ्गबद्वैलक्षण्येनावभासमानस्यापि तस्य ज्ञानत्वाविरहात् । इदमेव समर्थयन्नाह-इतरस्येति । तमोवृत्तेरज्ञानस्य ब्रह्मस्वरूपेऽसत्त्वादित्यर्थः । तत्र प्रमाणमष्टादशेति वैष्णवतन्त्रे-'न यत्र



ननु "ततो वत्सानदृष्ट्वैत्य पुलिनेऽपि च वत्सपान् । उभावपि वने कृष्णो विचिकाय समन्ततः" इत्यत्र मोहः, "क्वचित्पल्लवतल्पेषु नियुद्धश्रमकर्षितः । वृक्षमूलाश्रयः शेते गोपोत्सङ्गोपबर्हणः" इत्यत्र तन्द्राखेदश्रमाः, "तावङ्घ्रियुग्मम्" इत्यादौ मुग्धप्रभीतवदुपेयतुरन्तिमात्रोः" इति श्रमः, "वत्सान् मुञ्चन् क्वचिदसमये क्रोशसञ्जातहासः" इत्यादौ लोलता, "मदविघूर्णितलोचनः ईषन्मानदः स्वसुहृदां बनमाली" इत्यादौ मदः, 'लोके श्रमानिनां मौढ्याद्धरिष्ये श्रीमदन्तम" इत्यादौ मात्सर्य्यं, हिंसा च पूतनादिबधः "नाहं भक्षितवानम्ब सर्वे मिथ्याभिशंसिनः" इत्यत्र जरासन्धच्छलादौ चासत्यम्, क्रोधोऽपि तत्र तत्र प्रसिद्ध एव ॥७॥

माया किमुतापरे' इति 'माया परैत्यभिमुखे च बिलज्जमाना' इत्यादिकञ्चात्रानुचिन्त्यम । मोहस्तन्द्रेति-विष्णुयामले । खेदः क्लेशः, परिश्रम इन्द्रियशैथिल्यम ॥६॥

निरस्तान् दोषानापाद्य पुनः परिहरति-नन्वित्यादिना । 'ततो वत्सान्' इत्यादीनि 'काप्यदृष्ट्वान्तः' इत्यन्तानि श्रीदशमवाक्यानि । बिचिकाय मृगयामास । तावितित'तावङ्घ्रियुग्ममनुकृष्य सरीसृपन्तौ घोषप्रघोषरुचिरं ब्रजकर्दमेषु । तन्नादहृष्टमानसावनुसृत्य लोकं मुग्धप्रभीतवदुपेयतुरन्तिमात्रोः' इति कृत्स्नं बाक्यम् । अत्रातस्मिंस्तद्धीलक्षणो भ्रमः । 'कश्चिदावां ग्रहीतुमायाति' इत्येवंलक्षणः लोकं जनमनुसृत्य बीक्ष्य । लोलता चापल्यम् , मात्सर्य्यं

"तां स्तन्यकाम आसाद्य मथ्नतीं जननीं हरिः । गृहीत्वा दधिमन्थानं न्यषेधत् प्रीतिमावहन्" इत्यत्राकाङ्क्षा, "क्वाप्यदृष्टान्तर्विपिने वत्सान् पालांश्च विश्ववित् । सर्वं विधिकृतं कृष्णः सहसावजगाम ह" इत्यत्राशङ्का, "सोऽकामयत बहु स्यां प्रजायेय" इत्यादौ जगदावेशरूपो विश्वविभ्रमः, "समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः । ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्" इत्यादौ वैषम्यम्, "अहं भक्तपराधीनः" इत्यादौ परापेक्षा चावगम्यते । रूक्षरसताप्रेमसंबन्धादृते रागः उल्वणो दुःखहेतुः कामः तावेतौ मास्ताम् । ततश्च मोहादीनां प्रमाणसिद्धत्वान्निर्दोषतनुत्वं कथमितिचेन्न । भक्तानन्दवैचित्र्य-

---

परोत्कर्षासहनम् । नाहमित्यत्र हरेरसत्यभाषणं नास्ति मृदः पृथिव्यास्तद्गर्भे प्रागेव स्थितेरिति ये व्याचक्षते ते त्वपूर्वरसिका एव मागधच्छले खण्डितायां च प्रेयस्यां व्यभिचारात् ॥७॥

तामिति – आकाङ्क्षा क्षुधितस्य स्तन्यपानस्पृहा । क्वापीति । 'आशङ्का वितर्कः सः' इति तैत्तिरीयके । स परमात्मा । समोऽहमिति श्रीगीतासु । अहमिति—परापेक्षाऽन्याश्रयणम् । तानिति—संमुग्धत्वादीन् विना मुग्धताशङ्काभ्यामैश्वर्य्यसेविनां वितर्कविस्मयरसोदयः माधुर्य्यसेविनान्तु तत्प्रबोधनादिरसः लोलतामदाभ्यां सवयसां नियुद्धादिक्रीडा सुभ्रुवां तु स्मराहतबुद्धिः । तन्द्राखेदश्रमा भृत्यानां सेवानन्दविवर्द्धनास्तदिच्छाविशेषाः । मात्सर्य्यक्रोधहिंसाभिरसतां विनाशात्ताः सद्रक्षा एव । भ्रमलोल-



पोषक— लीलाविलास—भक्तसंरक्षणतद्वात्सल्यादिसिद्धये प्राकृतगन्धास्पृष्टाः स्वरूपधर्मा एवैते उदयन्ते, तान् विना लीलाद्यसिद्धेः । तदसिद्धौ च पूर्णत्वानुपपत्तिः । इतरेषु च सर्वेषु गुणेषु स्वभावात्तद्भक्त्यनुपपत्तिश्च । ततश्च श्रद्धाभक्तिध्यानयोगादौ तात्यादौ श्रुतिव्याकोपापत्तिरिति । तेषां गुणत्वादेव निर्दोषपूर्णगुणेत्यादिस्मृतिः सङ्गच्छते ॥८॥

त एते मौग्ध्यादयः स्वरूपशक्तिसारभूतलीलानन्दात्मका एव स्वरूपानतिरेकिनखरकुन्तलादिवत्तस्मिन्मन्तव्याः । "क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसम्भवाः । क्व चाखण्डितविज्ञानज्ञानैश्वर्य्यः सुरेडित" इत्यत्र येऽज्ञसम्भवास्ते क्वेत्युक्तेर्विज्ञसम्भवास्ते सन्तीति मतत्वात् । "तत्स्मारितानन्तहृताखिलेन्द्रियः" इत्यादौ विध्वस्ततमसां श्रीशुकादीनां च भगवत्प्रेममोहो दृष्टः ॥९॥

---

ताभ्यां पितृवर्गकौतुकाभिवृद्धिः । असत्येन क्वचित् सवयसां सुभ्रुवां च कोपोदयेन तत्तद्रसाभिवृद्धिः । विश्वविभ्रमेण प्रकृतिलीनजीवमात्रानुग्रहः । विषमत्वपरापेक्षाकाङ्क्षाभिः सर्वभक्तानुग्रह इति भाव्यम् । इतरेषु सार्वज्ञ्यादिषु गुणेषु तेषां संमुग्धत्वादीनाम् ॥८॥

दार्ढ्यायोक्तमर्थं विशदयति-त एत इति । क्वेति—श्रीदशमे शुकवाक्यम् । विज्ञेष्वपि मोहः क्व दृष्ट इति पृच्छायां तेषु तं दर्शयति-तदिति । श्रीदशमे सूतोक्तिः । परीक्षिता तेन स्मारितो

"गोप्यादद् त्वयि कृतागसि दाम तावद् यातेदशाश्रु-कलिलाञ्जनसम्भ्रमाक्षम् । बक्त्रं निनीय भयभावनया स्थितस्य सा मां बिमोहयति भीरपि यद्बिभेति", "मन्त्रेषु मां वा उपहूय यत्त्वमकुण्ठिताखण्डसदात्मबोधः । पृच्छेः प्रभो मुग्ध इवाप्रमत्तस्तन्मे मनो मोहयतीव देव!" इत्यादिषु तत्त्वविदामपि श्रीकुन्त्युद्धवादीनां मोहदर्शनान्नानुकृतिरूपास्ते श्रीशुकादिभिराबिश्योक्तत्वाच्च । लोकबिडम्बनादिशब्दास्त्वत्र दिव्यलीलया लोकाचारातिक्रमात् सङ्गच्छन्ते ॥१०॥

तदेवं मौग्ध्यसार्वज्ञ्ययोर्गुणयोः सहाविर्भावात् स्वसेवकार्त्तिस्तुतिपरिचर्य्याद्यवधानमपि सिद्धम् । एवं चोक्तमनु-

---

योऽनन्तः श्रीकृष्णस्तेन हृतान्यखिलानीन्द्रियाणि यस्य स श्रीशुकस्तत्प्रेमसंमुग्ध इत्यर्थः ॥९॥

'गोप्याददे' इति प्रथमे कुन्तीबाक्यम् । गोपी ब्रजेश्वरी तन्माता बक्त्रं निनीय अधः कृत्वा मामियं ताडयेदिति भयभावनया स्थितस्य वेत्यन्यत् प्रकटार्थम । मन्त्रेष्वित्युद्धबोक्तिस्तृतीये । मामुपहूयाकार्य्य । इहैबशब्दौ बाक्यालङ्कारार्थौ । किमिव निरागसि मयि कुप्यसीत्यादिवत् । न च मुग्ध इव तु मुग्धः मोहयतीब न तु मोहयतीति व्याख्येयम् । तथा सति बिरोधाभावात् । "कर्माण्यनीहस्य भवो भबस्य ते" इत्यादिषु बिरुद्धेषु तद्वाक्योपादानवैयर्थ्यात्तु कुन्तीबाक्ये इबशब्दाभाबाच्च । ते मोहादयः षोडश । लोकाचारेति-लोकाचरितन्यक्कारादित्यर्थः ॥१०



भवितृभिः "सर्वज्ञत्वे च मौग्ध्ये च सार्वभौममिदं महः । निर्विशन्नयनं हन्त निर्बाणपदमश्नुते" इति विरुद्धानां गुणानां सहावस्थितिः स्मर्य्यते । "ऐश्वर्य्ययोगाद् भगवान् विरुद्धार्थो ऽभिधीयते । तथापि दोषाः परमे नैवाहार्य्याः कथञ्चन । गुणा बिरुद्धा अप्येते समाहार्य्याः समन्ततः" इति । तदिदमभिहितं भगवता सूत्रकारेण "सर्वधर्मोपपत्तेश्च" इति । परमेश्वरः खलु शब्दैकनिर्णययाथात्म्यो भवति न तु तर्कैस्तत्र प्रतिविधानं युज्यते इति चोक्तं "श्रुतेस्तु शब्दमूलत्वात्" इति ॥११॥

---

ननु हरेर्मौग्ध्येन तत्त्वाद्रसासिद्धिः स्यात् किन्तु दीनाभ्यर्थनाऽनङ्गीकारेण प्रतीतेन बिक्षतिरिति चेत्तत्राह-तदेवमिति । मौग्ध्यकाल एव सार्वज्ञ्यमस्तीति न क्षतिलेश इति भावः । अत उक्तं तदभिज्ञोऽपीति । बिज्ञानुभवमत्र प्रमाणयति—एवञ्चोक्तमिति । अनुभवितृभिस्तस्य मौग्ध्यसार्वज्ञ्ये विजानद्भिर्लीलाशुकैः । सर्वज्ञत्वे चेति । सर्वासु भूमिषु बिदितं सार्वभौमं तदुभयधर्मशालित्वेन सर्वत्र ख्यातमित्यर्थः । महः स्वप्रकाशरूपं कृष्णाख्यं बस्तु । निर्वाणपदं मोक्षस्थानं गोकुलाख्यमश्नुते । स्वभोग्यत्वेनाऽनुभबता तत् स्वामि तदित्यर्थः । स्वरूपे शाबल्यापत्तिस्तु पूर्वोक्तैर्निरस्या । आर्षं प्रमाणमाह-ऐश्वर्य्येति कौर्म्मे । अचिन्त्यस्वशक्तित इत्यर्थः । एवं श्रीव्यासनिर्णयमाह-सर्वेति । सर्वेषां बिभुत्वमध्यमत्वादीनां मिथो बिरूद्धानां गुणानां ब्रह्मण्युपपत्तेः । सिद्धेरबिषमेऽपि तस्मिन् भक्तपक्षपातलक्षणं वैषम्यं मन्तव्यमिति

अन्ये त्वेवमाहुः—मौग्ध्यादयः प्रपञ्चधर्मा भगवताऽनुक्रियन्ते स्वजनानन्दाय "प्रपञ्चं निष्प्रपञ्चोऽपि विडम्बयसि भूतले। प्रपन्नजनतानन्दसन्दोहं प्रथितुं प्रभो" इत्यादिस्मृतेः। तथाऽपि तत्त्वविदा स्वस्य च तैः रसोदयः स्यात्। लवणाकरनिपातन्यायात्तत्कृतत्वेन तेष्वचिन्त्यत्वप्राप्तेः। श्रीबलप्रद्युम्नादिरूपेण शिष्यत्वभृत्यत्वपुत्रत्वाद्यनुकारो हि दृष्टः। देवर्षिभक्तत्वाद्यनुकारश्चेति ॥१२॥

तदेवमैश्वर्य्यमाधुर्य्यविषयत्वेन भगवतो ज्ञानं द्विविधं दर्शितम्। तेन तद्द्वारिकाया भक्तेश्च द्वैविध्येन भाव्यम्। तत्राद्या विधिभक्तिः। तया सिद्धाः सनिष्ठा दासाश्चाऽर्चिरादिवर्त्मना परं पदं लभन्ते। "तेऽर्चिषम्" इत्यादिश्रुतेः। ये त्वार्त्तास्तदतिकृपार्द्रास्ते खलु भगवतैव तार्क्ष्यवाहनेन तद्विशन्तीति मन्तव्यं वाराहचरतात्। यथाह—भूदेवीं प्रति

प्राकरणिकोऽर्थः। न त्वेवं स्याद्वादापत्तिः। मैवं, तद्वादे सर्वेऽर्थाः कथञ्चित्त्वेनाऽनिश्चितरूपा, इह तु निश्चितरूपा इत्यतिविशेषसत्त्वात् ॥११॥

सङ्गत्यन्तरमाह—अन्ये त्विति। प्रपञ्चमिति—ब्रह्मवाक्यं श्रीदशमे। विडम्बयस्यनुकरोषि। प्रपन्नेति। अस्या असङ्कोचेन मत्सेवने सुखवृद्धिः स्यादिति भावेनेति भावः। तेष्विति – स्वरूपनिष्ठधर्मवत्त्वेऽप्यचिन्त्याः स्युरिति भावः। श्रीति—श्रीश्च बलश्च प्रद्युम्नश्च तदादिरूपत्वेनेत्यर्थः। शिष्यत्वेत्यादौ क्रमो बोध्यः ॥१२



भगवान् वराहदेवः— "सोऽहमाश्रिततन्त्रात्मा स्मरामि च तदाश्रयम्। ज्ञानवैराग्यभक्त्यादिक्रियारूपप्रकाशनात् ॥ नयामि परमं स्थानमर्चिरादिगतिं विना। गरुडस्कन्धमारोप्य यथेष्टमनिवारितः" ॥ इति। एतानुद्दिश्याह पार्थसारथिः—"ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः। अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ तेषामहं समुद्धर्ता मृत्युसंसारसागरात्। भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्" ॥१३॥

अन्तिमा रुचिभक्तिः। तया सिद्धास्तु स्वयं भगवतैव तद्विशन्तीति तच्चरमादिलब्धकैमुत्यादभ्युपेयम्। "नाऽयं सुखापः" इत्यादेश्च। एते तु तस्याऽतिप्रेष्ठाः। तद्भावेषु तद्रुचिनिर्भरात्। यदाह गोवर्धनोद्धरणविस्मितैर्गोपैर्देवादिभावेनाऽऽशङ्कितो भगवान् श्रीविष्णुपुराणे— "मत्सम्बन्धेन वो गोपा यदि लज्जा न जायते। श्लाघ्यो वाऽहं

प्रकरणार्थं योजयति—तदेवमिति। एतानिति—हरिं विना क्षणमात्रं स्थातुमशक्तानार्त्तानित्यर्थः। ये त्विति श्रीगीतासु। मयि मदर्थमित्यर्थः। उपासते कीर्तनादिभिरनुकूलयन्ति न चिरात्त्वरयैव समुद्धर्ताऽहं भवामि ॥१३॥

अन्तिमेति। एते रुचिभक्ताः। आशङ्कितोऽवितर्कितः। शङ्का चेयं हरेरिव गोपानामप्यात्मधर्मत्वात्प्राज्ञत्वं प्रसञ्जयति। वक्ष्यति चैवम्। तस्मात्तद्भावमित्यादि। मदिति श्रीकृष्णवाक्यम्।

ततः किं वो बिचारेण प्रयोजनम् ॥ यदि वोऽस्ति मयि प्रीतिः श्लाघ्योऽहं भवतां यदि । तदात्मबन्धुसदृशी बुद्धिर्वः क्रियता मयि ॥ नाऽहं देबो न गन्धर्वो न यक्षो न च राक्षसः । अहं वो बान्धबो जातो नाऽतश्चिन्त्यमतोऽन्यथा"। इति । न चाऽत्र हृत्कम्पहेतोः सम्भ्रमस्योदयान्माधुर्य्यभावक्षतिः "देवो वा दानवो वा त्वं यक्षो गन्धर्व एव वा । किं बाऽस्माकं बिचारेण बान्धबोऽसि नमोऽस्तु ते ।" इति बन्धुभावस्यैव तैः स्थापनात् । तस्मात्तद्भावं यन्मुखाच्छ्रोतुं तेषां तथा शङ्कोत्थापनमिति ज्ञायते ॥१४॥

ननु कृष्णस्य भगवतो यशोदौरसपुत्रत्वे तस्मिन् बल्लबानां सगोत्रत्वलक्षणो बन्धुभावः स्यात् । न चाऽसौ तदौरसस्तथानुक्तेः भावबन्धुस्तु भवेत् "ये यथा माम्" इत्या-

---

हे गोपाः । प्रीतिः पुत्रत्वादिप्रकारिका । आत्मबन्धुसदृशीति—स्वपुत्रादिषु यथा बुद्धिस्तथा मयि क्रियताम् । बान्धबो ज्ञातिः । "सगोत्रबान्धबज्ञातिबन्धुस्वस्वजनाः समाः" इत्यमरः । श्रीहरिवंशेऽप्येबमस्ति । "देबो बा दानबो बा त्वं यक्षो गन्धर्व एब च । अस्माकं बान्धबो जातो योऽसि सोऽसि नमोऽस्तु ते ॥" इति गोपानां बाक्यम् । 'मन्यन्ते मां यथा सर्वे भबन्तो भीमविक्रमाः । तथाऽहं नाऽबमन्तव्यः सजातीयोऽस्मि बान्धबः ॥" इति कृष्णस्य च । तस्मादिति । तन्मुखात् कृष्णास्यात् । अत्र स्वयं तद्बन्धुभाबाऽभ्यर्थनात्तद्घटितेषु नन्दात्मजादिनामसु तदभिरुचिस्तानि कीर्त्तयत्सु तदतिप्रसादश्च गम्यते ॥१४॥



दितद्वाक्यात् । "नन्दात्मजो गोपिकासुतः" इत्यादिबाक्यं तूपगूह्यात्मजामित्यादिवदौपचारिकात्मजत्वपरं भावीति चेत् मैवमेतत् । "निशीथे तम उद्भूते जायमाने जनार्द्दने । देवक्यां देबरूपिण्यां विष्णुः सर्वगुहाशयः ॥ आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः" इत्यत्र "यशोदा नन्दपत्नी च जातं परमबुध्यत । न तल्लिङ्गं परिश्रान्ता निद्रयाऽपगतस्मृतिः" इत्यत्र च श्रीशुकेनैव तदौरसत्वस्योक्तेः । यशोदाऽपि देबकीत्युच्यते । "द्वे नाम्नी नन्दभार्याया यशोदा देवकीति च" इत्यादिपुराणवचनात् । देवरूपिण्यामित्युक्तेस्तद्गर्भसम्बन्धोऽपि

---

ब्रजौकसां बन्धुभावभाविता कृष्णे भक्तिर्या सा रागात्मिकेत्यभिधीयते यत्र तस्य रूचिनिर्भर उक्तः । तत्र शङ्कते-न त्विति । असौ कृष्णः । तर्हि नन्दात्मजादिपदानि कथमर्थबन्ति स्युस्तत्राह-उपगूह्येति । यशोदात्मजायां देव्यां यथा देबक्यात्मजत्वं औपचारिकमुक्तं तथा भबिष्यति । तस्माज्जन्मप्रकरणे यशोदौरसत्वं नोपलभ्यते इति चेन्नैबम् । तत्प्रकरणेऽपि तत्त्वं पठितमिति हेतुभावेनाह-निशीथेत्यादि । तम उद्भूतेऽन्धकारव्याप्ते निशीथे जनार्दने लीलापुरुषोत्तमे देबक्यां यशोदायां जायमाने सति देबक्यां देबकसुतायां बिष्णुराबिरासीदिति योज्यम् । तद्गर्भेति । न हि सुरम्भिणि रत्नमन्दिरे स्थितो नृपतिरपुरुषार्थी स्यादिति भावः । इत्थञ्चेत्यादि । उपगूह्यात्मजामिति मुनिना तूक्तम् । स्वपुत्रं गोपायितुं सुतैव मेऽभून्न तु सुत इति देव-

न दोषावहः । वसुदेवपत्नीवन्नन्दपत्नी न परं परेशमेव स्वगर्भाज्जातमबुध्यत । तस्य वसुदेवागमादेर्लिङ्गं चिन्हं नाऽबुध्यत यतः परीत्यादि । "नन्दगोपगृहे जातो यशोदागर्भसम्भवः" इत्यादि पुराणे स्फुटमुक्तेश्च । इत्थश्च नन्दात्मजगोपिकासुतादिशब्दैर्मुख्यार्थैर्भाव्यम् । ननु स्फुटार्थप्रत्ययो विरुद्धः स्यात् । मैवम् । यशोदासुतेन सह देवकीसुतस्यैक्यात्तदेकस्य तस्य मथुरादिषु गमनादन्तरान्तरा व्रजे कुरुक्षेत्रे चागतेः स्फुटार्थस्याऽप्यभङ्गात् । तथा चोभयथापि तद्बन्धुः सः ॥१५॥

तदेवं द्विविधज्ञानभक्तिगोचरः कृष्णाभिधानः पुरुषोत्तमः कृत्स्नशक्तिव्यञ्जी स्वयं भगवानुच्यते । अकृत्स्नतद्व्यञ्जी द्वयेकतद्व्यञ्जी च विलासोंऽशः कला चेति "एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्" "अष्टमस्तु तयोरासीत् स्वयमेव हरिः किल" इत्यादिस्मृतेः । ननु यस्य पुंसो मत्स्यादयोंऽशकलाः स पुमानेव कृत्स्नशक्तिप्रकाशी कृष्ण इत्यर्थप्रत्ययान्नोक्तव्यवस्थेति चेत् मैवम् । भिन्नोपक्रमार्थकात्तु शब्दात् ब्रह्मसंहितायां कृष्णरूपं प्रकृत्य त्रयाणां पुरुषाणां रामादीनां च तदवतारत्वोक्तेश्च । तथा हि "ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः । अनादिरादिर्गोविन्दः सर्वकारणकारणम् । सहस्रपत्रं कमलं गोकुलाख्यं महत्पदम् । तत्कर्णिकारं तद्धाम तदनन्तांशसम्भवम्" इत्यादिकमुक्त्वा "यः कारणार्णवजले भजति स्म योगनिद्रामनन्तजगदण्डसरोमकूपः । आधारशक्तिमवलम्ब्य परां स्वमूर्तिं गोविन्दमादिपुरुषं तमहं भजामि" "यस्यैकनिश्वसितकालमथाऽवलम्ब्य जीवन्ति रोमविलजा जगदण्डनाथाः । विष्णुर्महान् स इह यस्य कलाविशेषो गोविन्दम्" इत्यादि । "दीपार्चिरेव हि

---

कथा उक्तम् । उभयथेति स्वगोत्रत्वेन भावेन च स कृष्णस्तद्बन्धुः । प्रपञ्चान्तर्गते धाम्नि यशोदादिभिः सार्द्धमेष मातृपुत्रादिभावो लोकवत् पूर्वोत्तरभावेनैव स्थितः । प्रपञ्चातीते तस्मिस्तु 'ॐकृष्णाय देवकीनन्दनाय' इत्यादिके 'गोपगोपीगवावीतम्' इत्यादिके च मन्त्रे यस्तद्भावः पठ्यते स त्वलौकिकश्चन्द्रकादिगतनानावर्णवदनादिवर्णवदनादितो युगपत् सिद्धः पद्मकोरकगतलघुबृहत्पत्रचयवच्च बोध्यः ॥१५॥

अथ यशोदौरसस्यास्य कृष्णस्य सर्वतदाविर्भावमूलस्वरूपं स्वयं भगवत्त्वं वक्तुं प्रकरणमारभते-तदेवमिति । एवमुक्तविधया ।

अकृत्स्नतदिति । तच्छब्देन शक्तिः परामृश्यते । एते चेति प्रथमे सूतवाक्यम् । पुंसो गर्भोदकशायिनः प्रद्युम्नस्य सहस्रशीर्ष्णः । कृष्णस्त्विति । तुशब्दः पृथगुपक्रमार्थः । "तु स्याद् भेदेऽवधारणे" इत्यमरः । गर्भोदशायादाविर्भवत्सु मत्स्यादिषु मध्ये कृष्णः पठितस्तथाऽपि न स तदवतारः किन्तु तदादिसर्वमूलभूत इत्यर्थः । अष्टमस्त्विति नवमे । तयोर्देवकीवसुदेवयोः स्वयमेव हरिरासीत् । नन्विति यस्य गर्भोदकशयस्य पुंसः । ईश्वर इति ।

दशान्तरमभ्युपेत्य दीपायते विवृतहेतुसमानधर्मा । यस्ताद्दगेव हि च विष्णुतयाऽवभाति गोविन्दम्" इत्यादि च । "रामादिमूर्त्तिषु कलानियमेन तिष्ठन्नानावतारमकरोद् भुवनेषु किन्तु । कृष्णः स्वयं समभवत्परमः पुमान् यो गोविन्दम्" इत्यादि च ॥१६॥

---

कृष्ण इति बिशेष्यम् । स कीदृशः परम ईश्वरः स्वयं भगवान् अतोऽनादिः स्वेतरेषां बिरिञ्च्यादीनां त्वादिः । नन्वन्येषां प्रधानादीनाञ्च कारणत्वं पठ्यते तत्राह—सर्वेति । सहस्रेति । अनन्तस्य श्रीबलदेबस्यांशेन सम्भवः सर्वदाविर्भाबो यस्य तत् । तन्त्रेण अनन्तः शेषोंऽशो यस्य सोऽनन्तांशो बलभद्रस्तस्य सम्भबो निबासो यत्र तत् । कृष्णस्यैब कारणोदशायित्वमाह—य इति । यः कृष्णः कारणार्णबजले आधारशक्तिमयीं परामुत्कृष्टां स्वमूर्निं शेषाख्यामबलम्ब्य योगनिद्राम्भजति । य एबांशेन प्रकृत्यन्तर्यामी सहस्रशीर्षा सङ्कर्षण इत्यर्थः, कीदृशो यः अनन्तजगदण्डैः सहिता रोमकूपा यस्य सः, सहशब्दस्य पूर्वनिपाताभावः आर्षः । तं भजामीत्यन्वयः । कीदृशमित्याह—गोबिन्दं गबामिन्द्रमित्यर्थः ! अथ गर्भोदशायितामाह—यस्येति । यस्यैकनिश्वसितं कालमालम्ब्य जगदण्डनाथा ब्रह्मबिष्णुशिबा जीबन्ति तत्तादधिकारितया जगति प्रकटं तिष्ठन्ति स महाबिष्णुर्यस्य कृष्णस्य कलाबिशेषो भबति । योंऽशेन सर्वब्रह्माण्डान्तर्यामी ब्रह्मणः पिता प्रद्युम्नो भबतीत्यर्थः । अथ क्षीरदोशायितामाह—दीपार्चिरिति । महादीपो यथा दशान्तरमन्यां बर्त्तिमुपेत्य दीपायतेऽतिनिर्मलसूक्ष्मदीपत्वेनाऽऽबिर्भबति । कीदृशः



तन्वस्तु कृष्णः पुरुषाद्यवताराणामबतारी । तदवतारी तु परमव्योमाधिपतिरस्तु तस्य कुत्राप्यबतारत्वोनुक्तेश्चेति चेत् मैवमेतत् । तस्यामेव "गोलोकनाम्नि निजधाम्नि तले च तस्य देवीमहेशहरिधामसु तेषु तेषु । ते ते प्रभावनिचया विहिताश्च येन गोविन्दम्" इति तस्यापि कृष्णाविर्भावत्वाभिधानात् । "सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत्फलम् । एकावृत्त्या तु कृष्णस्य नामैकं तत् प्रयच्छति"

---

बिवृतः प्रकटितो हेतुसमानो महादीपबत् प्रकाशलक्षणो धर्मो येन सः, यो गोबिन्दस्तादृगेब बिष्णुतयाऽबभाति, योंऽशेन क्षीराब्धिपतिरनिरुद्धो जगत्पालक इत्यर्थः । अथ कृष्णस्यैव रघुनाथादिरूपतामाह-रामादीति । यः कृष्णाख्यः परमः पुमान् कलानियमेन तत्र नियतानामेब शक्तीनां प्रकटनेन रामादिमूर्तीषु तिष्ठंस्तत्तन्मूर्त्तीः प्रकटयन् भुवनेषु नानाबतारमकरोत्, य एव च स्वयं सर्वशक्तिमान् सन् समभबदबातरत्तामित्यादि प्राग्बत् । एबमुक्तं देवैः 'मत्स्याश्वकच्छपनृसिंहबराहहंसराजन्यबिप्रबिबुधेषु कृतावतारः । त्वम्पासि नस्त्रिभुबनं च तथाऽधुनेश भारं भुबो हर यदूत्तम बन्दनन्ते' ॥१६॥

उक्तमर्थं स्वीकृत्याऽऽशङ्कते-नन्विति । तस्य परमव्योमाधिपतेः । कुत्रापीति, वेदे पुराणे वेत्यर्थः । तस्यामिति – ब्रह्मसंहितायामेब । प्रपञ्चगतं मृहिमानमुक्त्वाऽथ निजधामगतं तमाह–गोलोकेति । देबीमहेशेत्यादिगणनं व्युत्क्रमेण बोध्यम् । देव्यादीनां यथोत्तारं ऊर्ध्वोर्ध्वत्वेन प्रभाबबत्त्वात् । अधोधः स्थितेषु हरिमहेशदेबीधामस्वित्यर्थः । तथा च कृष्णो नारायणः

इति ब्रह्माण्डे सर्वोद्ध्र्वनाममाहात्म्याच्च कृष्णस्यैव सर्वावतारित्वम् । अत एव "यद्वाञ्छया श्रीर्ललनाऽचरत्तपो विहाय कामान् सुचिरं धृतव्रता" इति तन्महिष्याः श्रीदेव्या नित्यानुभूतस्वपतिकाया अपि कृष्णरूपस्पृहोक्ता सङ्गच्छते ॥१७॥

इदन्तु बोध्यम् । गोलोके निवसन् कृष्णस्तदाविर्भावे परमव्योम्नि तदधिपतिः श्रीनिवासः पुरुषाभिधानो रामादिश्चाऽनादित एवादिभूतो दीव्यति । पुरुषादिः प्रपञ्चसम्बन्धेन कदा कदाचिद्भवेत्तदधिपतिस्तु तत्सम्बन्धेन न

सन् परमे व्योम्नि सर्वदा दीव्यतीति-स तस्याविर्भाव इति स्फुटमेवोक्तम् । सहस्रेति - वैशम्पायनोक्तानां सहस्रनाम्नां त्रिरावृत्त्या यत् फलं तत् कृष्णस्यैकं नाम । ब्रह्माण्डपुराणान्तवर्त्त्यष्टोत्तरशतनामगतं कृष्णावतारसम्बन्ध्येकमेव नामैकावृत्त्या प्रयच्छतीत्यर्थः । तेषु सर्वस्वाविर्भाववत्त्वविष्टस्य कृष्णस्य नामान्युक्तानीह तु कृष्णत्वेनैव विशिष्टस्येति विशेषः । तद्गतादेतद्गतं तदेव नाम बहुफलं भगवद्वाक्यान्तराद् भगवद्गीतावदित्याहुः । अधिकगुणत्वादेवेत्यर्थः । यदिति - कालीयस्त्रीवाक्यम् । यस्य त्वदङ्घ्रिरेणुस्पर्शस्य वाञ्छया श्रीः परव्योमाधीश्वरी । एवमेव पुराणे कथास्तीति सङ्क्षिप्तभागवतामृते द्रष्टव्यम् । अत्र परव्योमाधीशावतारीत्वाभिधानात् कृष्णस्य वासुदेवव्यूहावतारत्वं स्वयमेव निरस्तमतस्तन्न परीक्षितमिति वेदितव्यम् ॥१७॥



कदाचिदपीति तस्य तस्य चावतारत्वानवतारत्वव्यपदेशः । तत्सम्बन्धादेव कृष्णस्यापि तदुक्तिरिति । पुरुषाद्यवताराणां परमव्योमनिलयत्वन्तु "वैकुण्ठभुवने नित्ये निवसन्ति महोज्ज्वलाः । अवताराः सदा तत्र मत्स्यकूर्मादयोऽखिलाः" इति पाद्मात् । तदेवं कृत्स्नशक्तिप्रकाशादनन्यापेक्षिरूपत्वाच्च कृष्णस्य स्वयं भगवत्त्वमिति श्रीभागवतब्रह्मसंहितादिश स्वदृष्ट्या निर्णीतम् । एतत् सर्वमूले श्रीगोपालोपनिषदि चैवमेव परिदृष्टम् । तत्र हि "कः परमो देवः" इत्यादिना सर्वदुःखहरं सर्वहेतुः परदैवतं किमिति मुनिभिः पृष्टो ब्रह्मा कृष्णस्यैव तथातथाभावमभिधाय परमव्योमाधीशकारणोदशाय्यादेश्च तदभिधानात् कथं कृष्णस्यैव स इत्याशङ्कायाम् "एकोऽपि सन् बहुधा योऽवभाति" इति तस्यैव तदधीशादिभावमभ्यधात् । श्रीगीतासु च "मत्तः परतरं नान्यत्" इति ॥१८॥

उक्तेऽर्थे कञ्चिद्विशेषमाह—इदन्तु बोध्यमित्यादिना । पुरुषादिरित्यत्रादिपदाद्रामादिर्ग्राह्यः । तस्य तस्य चेति - तस्य पुरुषादेः तस्य च परमव्योमाधिपतेरित्यर्थः । तत्सम्बन्धात् प्रपञ्चे समागमात् स्वयं रूपस्यापि कृष्णस्य तदुक्तिरवतारत्वभणितिरित्यर्थः । अप्राकृताल्लोकात् प्राकृते लोकेऽवतरन् ह्यवतारः । तदेवमिति । कृत्स्नशक्तिप्रकाशः परव्योमाधिपेऽप्यस्तीत्यत आह—अनन्येति । एतत् सर्वमूल इति । तथातथाभावं

यत्तु "पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवाऽवशिष्यते" इति श्रुत्या "सर्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः। हानोपादानरहिता नैव प्रकृतिजाः क्वचिद्। परमानन्दसन्दोहा ज्ञानमात्राश्च सर्वतः। सर्वे सर्वगुणैः पूर्णाः सर्वदोषविवर्जिताः।" इति महावाराहोक्त्या च सर्वेषां स्वरूपाणां पूर्णत्वप्रत्ययात् कतमदनन्यापेक्षि स्वयं रूपमिति न शक्यं निश्चेतुमिति कश्चिदाह। तदपेशलम्, स्वरूपभेदे सत्यस्याः शङ्कायाः प्रवृत्तेः। न चात्र तद्भेदः। एक एव कृष्णः परेशो वदूर्य्यवदात्मनि नानारूपाभिव्यञ्जी। "एको वशी सर्वगः कृष्ण ईड्यः" "एकोऽपि सन् बहुधा योऽवभाति" इत्यादिश्रुतेः। यथैकस्यैव षट्शास्त्रज्ञस्य विदुषः क्वचित् कृत्स्नशास्त्रोद्ग्राहिणः सर्वज्ञत्वं प्रतीयते क्वचिदकृत्स्नतद्ग्राहिणो द्वेकतद्ग्राहिणश्च सर्वज्ञकल्पत्वं ज्ञत्वं चेत्येव-

सर्वदुःखहरत्वादीति धर्मं तदभिधानात् शास्त्रे सर्वदुःखहरत्वादिधर्मकीर्तनात्। स तथातथाभाव। तदधीशादिभावं परव्योमाधिपत्वादिधर्मम्। आदिना पुरुषत्वादिर्ग्राह्यः ॥१८॥

संशयान्तरं निरस्य तूक्तमर्थं दृष्टान्तेन ग्राहयति-यत्त्वित्यादिना। पूर्णमिति बृहदारण्यके। अदो मूलरूपं इदं प्रकाशरूपं उभयं पूर्णम्। पूर्णान्मूलरूपात् पूर्णं प्रकाशरूपमुदच्यते प्रादुर्भवति। पूर्णस्य तस्य पूर्णं रूपमादाय स्वस्मिन्नन्तर्भाव्य पूर्णं



मेकस्य कृष्णस्य बह्वल्पशक्तिव्यक्तिसव्यपेक्षाण्यंशित्वांशत्वादीनि। एवमेवोक्तं वृद्धैः - "एकत्वं च पृथक्त्वं च तथांशत्वमुतांशिता। तस्मिन्नेकत्र नायुक्तमचिन्त्यानन्तशक्तितः। शक्तेर्व्यक्तिस्तथाऽव्यक्तिस्तारतम्यस्य कारणम्" इति। स्वेच्छया नानाशक्तिप्रकाशित्वमंशित्वम्। तस्यैव सर्वदाऽल्पशक्तिप्रकाशित्वमंशत्वम् ॥१९॥

एतेन परमव्योमाधिपादिरूपोऽपि सन् कृष्णः सर्वान् गुणान् प्रकाशयेत् तत्रापि गुणपूर्णत्वादिति निरस्तम्। यत्त्वथर्वशिरसि पुरुषावतारात् "अथ पुरुषो ह वै नारायणोऽकामयत" इत्यादिना विश्वसृष्टिमुक्त्वा ब्रह्मणो देवकीपुत्र इति तस्यैव कृष्णत्वमुक्तमिति कश्चिद् बभ्राम, तच्च प्रत्युक्तम्। तत् केशवत्वन्तु सुदूरापास्तम् उक्तनिर्णयात् "नारायणोऽङ्ग नरभूजलायनात्" इति स्मृतेश्च। किन्तु कृष्णस्यैव पुरुषावतारित्वं तत्रोक्तमिति सुष्ठु। अन्यथोक्तार्थवैपरीत्यापत्तेः ॥२०॥

मूलरूपमवशिष्यते तिष्ठति। सर्वे इति नित्याः सनातनाः शाश्वता जगति पुनः पुनराविर्भाविनः स्वनिर्णीते स्वपूर्वेषां संमतिमाह-एवमेवेति। वृद्धैः श्रीरूपचरणैः। तस्मिन्निति। एकस्मिन्नेव तस्मिन् कृष्णे। स्फुटमन्यत् ॥१९॥

उक्तेनैवार्थेन सन्देहान्तराणाञ्च च्छेदोऽभूदित्याह-एतेनेति। यत्त्वथर्वेति। पुरुषावताराद् गर्भोदकशयात्। तथा च स पुरुषः

कृष्ण एवोक्तास्त्र व्यक्तेः। ततो ब्रह्मादिर्जनिस्तु तदभेदादेव मन्तव्या, अन्यथा स्मृत्यर्थविरोधापत्तिः। क्षीराब्धिपतेः कृष्णत्वोक्तिस्तु रभसादेवेत्याह–तत् केशवत्वं त्विति। देवैः क्षीराब्धिपतिः शुक्लनीलौ केशावुद्ववर्हे तावेव बलकेशवौ भूत्वा भूभारमपजहतुरिति भारतवाक्यार्थे यत् केचिदूचुस्तत्प्रमादादेवोक्तनिर्णयात्। किन्त्वेवं तदर्थः। केशशब्दस्तत्रांशुवाची 'अंशवा ये प्रकाशन्ते मम ते केशसंज्ञिताः। सर्वज्ञाः केशवं तस्मान्मामाहुर्मुनिसत्तमाः' इति नारायणीये कृष्णवाक्यात्। नानावर्णानां तदंशूनां तत्र नारदेन दृष्टत्वाच्च। अतस्तत्र सर्वत्र केशशब्द एवं प्रयुक्तः। तथा च स्वयं भगवति कृष्णे बलदेवे च तद्व्यूहे स तदा स्वांशुभ्यामनुजगामेति स्वयं भगवत्यवतरति सर्वे तद्विलासव्यूहस्वांशास्तमंशैरनुगच्छन्तीत्युक्तं तृतीये। "स्वशान्तरूपेष्वितरैः स्वरूपैरभ्यर्थ्यमानेष्वनुकम्पितात्मा। परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भगवान् यथाग्निः" इति। न च देवैरभ्यर्थितः पुरुषः 'अहमेव कृष्णो भविष्यामि' इत्युक्तवानपि तु 'ईश्वरेश्वरः परः पुरुषो जनिष्यते' इत्यवोचदिति श्रीदशमप्रस्तावाच्च। 'नारायणोऽङ्गम्' इति ब्रह्मवाक्यं श्रीदशमे। हे कृष्ण नरभूजलायनात् कारणार्णवशयात् प्रकटो यो नारायणोऽस्मत्पिता गर्भोदकशयः स तवाङ्गमंश इति तदर्थः। कश्चित्त्वत्रैवं समाधत्ते। प्रतीतो वार्थोऽस्तु। तत्र फेनसृष्टाववनिरिव तत्कुन्तले स्वयं हरिः प्रविष्टः। अन्यथा कृष्णस्तु भगवान् स्वयमिति व्याकुप्येदिति। अन्यथेति। निर्णीतार्थास्वीकारे शास्त्रोक्तानामर्थानां वैपरीत्यं स्यात्। कृष्णाविर्भावे परव्योमनाथे कृत्स्नकृष्णगुणप्राकट्येऽङ्गीकृते तत्पत्न्याः श्रीदेव्याः कृष्णाङ्घ्रिरेणुस्पृहा भागवतोक्ता, त्रिषु पुरुषेषु तत् प्राकट्येऽङ्गीकृते तेषां कृष्णांशता ब्रह्मसंहितोक्ता, श्रीदाशरथौ तत्प्राकट्ये-



यच्च तस्मिन्नेव "यो वै श्रीरामचन्द्रः स भगवान् ये मत्स्यकूर्मादयोऽवतारास्तस्मै वै नमो नमः" इति सीतापतेर्मत्स्याद्यवतारित्वमुक्तम् तत् किल युक्तमेव। तस्य परमव्योमाधिपतिरूपत्वात्। यच्च "त्रयाणामपि लोकानामादिकर्ता स्वयं प्रभुः" इति श्रीरामायणे "अधिकसाम्यविमुक्तधाम्नः" इति श्रीभागवते च तस्य स्वयंपदबोध्यत्वमुक्तं तदपि मत्स्याद्यंशित्वाभिप्रायेणैव नेयम्। कृष्णादविशेषे स्वीकृते तु "रामादिमूर्तिषु कलानियमेन तिष्ठन्" इत्युक्तिर्दृष्टरामाणामपि दण्डकारण्यनिवासिनां महर्षीणां

ऽङ्गीकृते दृष्टदाशरथीनां दण्डकारण्यनिवासिनां महर्षीणां कृष्णस्पृहा पाद्मोक्ता, दाशरथ्यादिषु कलानियमेन स्थितिश्च ब्रह्मसंहितोक्ता व्याकुप्येत। इत्थमेव वासुदेवे सङ्कर्षणस्य स्वाधिपत्वधीर्बहुमानश्च श्रीकृष्णे बलदेवस्य भर्तृत्वधीः प्रद्युम्नादीनां पितृत्वादिधीरत्यादरश्च भागवतोक्ताः, श्रीरामे लक्ष्मणादीनां स्वामित्वधी रामायणोक्ता श्वेतद्वीपपतौ नरनारायणयोः स्वप्रकृतित्वधीर्भक्तिश्च नारायणीयोक्ता सङ्कुच्छेरन्नन्यथा तस्मादंशिनांशो व्यङ्ग्यो न त्वंशेनांशीति स्थितम् ॥२०॥

ननु श्रीरामतापन्यां सीतापतेश्च मत्स्याद्यवतारित्वश्रवणात् श्रीरामायणादौ स्वयंपदवाच्यत्वस्मरणाच्च कृष्णस्यैव तत्त्वादित्याग्रहः कस्मादिति चेत्तत्राह–यच्चेति। तस्मिन्नथर्वशिरस्येव। तस्य परमव्योमेति। पाद्मे खलु परमव्योमाधिप एव सीतापतिरभूत्। शेषचक्रशङ्खास्तु लक्ष्मणभरतशत्रुघ्ना अभूवन्निति वर्णितम्।

कृष्णस्पृहोक्तिश्च व्याकुप्येत । "पूर्णमदः" इत्यादीनि वाक्यानि स्वरूपसत्सर्वगुणानि सर्वाणीत्याहुः न त्वभिव्यक्तसर्वगुणानीति । तस्मात् सर्वदाऽभिव्यक्तसर्वशक्तित्वात् कृष्णस्यैव स्वयंरूपत्वं सिद्धम् ॥२१॥

श्रीकृष्णे हि राधाद्याः पूर्णाः शक्तयः सर्व्वातिशयिप्रेमपूर्णपार्षदत्वब्रह्मादितत्त्वज्ञविस्मापकस्थिरचरविमोहकवेणुनादमाधुर्य्यस्वपर्य्यन्तसर्व्वविस्मापकरूपमाधुर्य्यनिरतिशयकारुण्यादयो गुणाः श्रीशुकादिभिरनुभूताः सर्व्वदाविर्भवन्ति न त्वन्यत्र । पुरुषबोधिन्यामथर्वोपनिषदि श्रूयते—"गोकुलाख्ये माथुरमण्डले वृन्दावनमध्ये सहस्रदलपद्ममध्ये

---

विष्णुधर्मोत्तरे तु वासुदेवादयश्चत्वारो व्यूहाः क्रमाद्रामादयो बभूवुरिति स्मृतमिति सिद्धम संक्षिप्तभागवतामृते दृश्यते । तथा च श्रीरघुवर्य्यस्य मत्स्याद्यवतारित्वं साम्प्रतमेव । ननु कृष्णस्य रामस्य चावतारित्वप्रकीर्तनात्तस्मात्तस्य तिलमात्रोऽपि विशेषो मास्तु तत्राह—कृष्णादविशेषे इति वैलक्षण्यलेशे ऽप्यनङ्गीकृते इत्यर्थः । अल्पार्थेन भूद्दष्ट्ररामाणामपीति । "पुरा महर्षयः सर्वे दण्डकारण्यवासिनः । दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् सुविग्रहम् ॥ ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले । हरिं सम्प्राप्य कामेन ततो मुक्ता भवार्णवात्" इति पाद्मे ॥२१॥

परमव्योमाधिपादिष्वनभिव्यक्ताद् कृष्ण एव सर्वदाभिव्यक्तान् विशेषान् दर्शयति—श्रीकृष्णे हीति । उक्तं प्रमाणयति पुरुषबोधिन्यामित्यादिना । पिप्पलादशाखायां स्थितेयम् । निर्गुणः प्रकृतिगुणैरस्पृष्टः, सगुणः स्वरूपानुबन्धिषाड्गुण्यः,



कल्पतरोर्मूले ऽष्टदलकेशरे गोविन्दोऽपि श्यामः पीताम्बरो द्विभुजो मयूरपुच्छशिरो वेणुवेत्रहस्तो निर्गुणः सगुणो निराकारः साकारो निरीहः सचेष्टो विराजते द्वे पार्श्वे चन्द्रावली राधिका चेति" "यस्या अंशे लक्ष्मीदुर्गादिका शक्तिरिति" अग्रे च "तस्याद्या प्रकृती राधिका नित्यनिर्गुणसर्व्वालङ्कारशोभिता प्रसन्नाशेषलावण्यसुन्दरी"—त्यादि । ऋक्परिशिष्टे च-"राधया माधवो देवो माधवेनैव राधिका । विभ्राजन्ते जनेष्वा" इति ॥२२॥

गौतमीये तन्त्रे चैवं स्मर्य्यते—"सत्त्वं तत्त्वं परत्वञ्च तत्त्वत्रयमहं किल । त्रितत्त्वरूपिणी सापि राधिका मम वल्लभा ॥ प्रकृतेः पर एवाहं सापि मच्छक्तिरूपिणी" इति, "देवी

---

निराकारः प्राकृताकाररहितः, साकारः स्वरूपानुबन्धिमनुष्याकृतिकः, निरीहः प्राकृतचेष्टा रहितः, सचेष्टः समुद्रतरङ्गन्यायेन स्वोल्लासात्मकनित्यचेष्टितः । द्वे पार्श्वे इति श्रीराधाया वामपार्श्वे स्थितिर्बोध्या । "वामाङ्ग-सहिता देवी राधा वृन्दावनेश्वरी" इति कृष्णोपनिषद्वाक्यात् । तेन तस्यास्तत्प्रेयसीवृन्दमुख्यत्वम् । एतदेवाह—यस्या इति । यस्याः श्रीराधिकाया अंशे लक्ष्मी—वैकुण्ठेश्वरी रमा दुर्गा मन्त्रराजाधिष्ठात्रीति सन्दर्भादवगन्तव्यम् । नित्यनिर्गुणा माया-गन्धेनाप्यस्पृष्टा । स्वरूपानुबन्धिभिर्गुणैस्तु विशिष्टेत्याह— अग्रे चेति । राधयेति— विभ्राजन्त इति बहुत्वं छान्दसम् । जनेषु व्रजौकस्सु ॥२२॥

श्रुत्यर्थं स्मृत्योपबृंहयति—सत्त्वमिति । बृहद्गौतमीये

कृष्णमयी प्रोक्ता राधिका परदेवता । सर्व्वलक्ष्मीमयी सर्व्वकान्तिः सम्मोहिनी परेति"। इह कृष्णमयी परेत्यनेनेदमुक्तम्। "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति" श्रुत्या। "याऽतीतगोचरा वाचां मनसाञ्चाविशेषणा। ज्ञानिज्ञानपरिच्छेद्या बन्दे तामीश्वरीं परामिति" स्मृत्या च। या भगवदभिन्नाऽभिहिता या च ह्लादिनीत्यादिना विशेषिता सा परैव राधिकेश्वरीति। तथाच ह्लादिनीसम्वित्सारांशप्रेमात्मिका सेति कामाद्यधिकरणभाष्ये स्फुटमेतत् ॥२३॥

बलदेवं प्रति कृष्णवाक्यम्। सत्त्वं कार्य्यत्वं तत्त्वं कारणत्वं ततोऽपि परत्वञ्चेति यत्तत्त्वत्रयं तदहं सा राधिकापि तत्त्वत्रयरूपा। एतत् सार्धकान्तेऽन्यत् सार्वकमस्ति। "सात्त्विकं रूपमास्थाय पूर्णोऽहं ब्रह्म चित् परः। ब्रह्मणा प्रार्थितः सम्यक् सम्भवामि युगे युगे॥ तया सार्द्धं त्वया सार्द्धं नाशाय देबताद्रुहाम" इति। यद् बस्त्वहं तदेव राधेति निष्कर्षः। कार्यकारणभेदस्तु व्याप्यस्य व्यापकानतिरेकस्मरणान्नेयः। देवीति—तत्रैव तन्मन्त्रकथने राधिका परेत्यन्वयः। देवी देवस्य कृष्णस्य पट्टमहिषी। भेदं प्राप्तं निबारयितुमाह—कृष्णमयी कृष्णानन्या। सत्त्वं तत्त्वमित्यादेः। एबमपि परदेवता कृष्णोपासिका सर्वलक्ष्मीमयी सर्बासां लक्ष्मीनामंशिनी। यस्या अंशे लक्ष्मीदुर्गादिका शक्तिः इत्युक्तेः। सर्बासां तासां कान्तिरच्यंत्ववाञ्छा यस्यां सा कान्तिराभा बा तासु सर्बासु यस्याः सेत्येके। संमोहिनी कृष्णेऽनुरञ्जिका। परास्येति श्वेता-



एवं सति यत्तु स्कान्दे काचिन्नर्त्तकी श्रीमूर्त्तेर्माधुरीं दृष्ट्वा तदग्रे प्रबोधनीजागरनृत्याद्राधाभूदित्युक्तं तत्र किल ब्रह्मैव सन् ब्रह्माप्येतीत्यादिवत्तत्सादृश्यमगमदित्येव मन्तव्यम् ॥२४॥

श्वतराणामुपनिषदि। अस्य परेशस्य, बिबिधांशांशः, स्वाभाबिकी स्वरूपानुबन्धिनी। ज्ञानेति-ज्ञानं संवित् बलं सन्धिनी क्रिया ह्लादरूपो धात्वर्थस्तद्भूता। यातीतेति-श्रीवैष्णवे प्रह्लादबाक्यम्। या बाचां मनसां चातीतगोचरा अतिक्रान्तो गोचरो बिषयता यया सा। अबिशेषणा ताभिस्तैश्च गुणकर्मभ्यां बिशेष्टुमशक्येत्यर्थः। यतो बाच इत्यनेन या निरूप्यते सैवेयं संविदिति भगबदभिन्नता दर्शिता। किं तर्हि निर्बिशेषा संबित् सेत्यत्राह-ज्ञानीति। ज्ञानिनां तदुपासकानां च ज्ञानेन परिच्छेद्या स्वानुबन्ध्यनन्तगुणत्वेन याथात्म्येन गम्येत्यर्थः। तां परां बन्दे। ईश्वरीमीश्वरस्यात्मभूतां पट्टमहिषीमित्यर्थः। परास्य शक्तिरित्यादेः। तथा चेत्यादि प्रकटार्थम् ॥२३॥

दुर्धियां शङ्कामपाकर्तुमाह-एवं सतीति। श्रीराधाया भगबत्स्वरूपानुबन्धिपराशक्तिसारमहालक्ष्मीत्वे सिद्धे सतीत्यर्थः। ब्रह्मैवेति--ब्रह्मध्यायी जीबो ब्रह्मैव सन् ब्रह्मसदृशः सन् ब्रह्माप्येतीतिबदित्यर्थः। "एबौपम्येऽबधारणे" इति बिश्वः। मोक्षे जीबस्य ब्रह्मसादृश्यमुक्तं "निरञ्जनः परमं साम्यमुपैति" इति श्रुत्या, "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' इति स्मृत्या च। राधाध्यायिनी सा नर्तकी राधासादृश्यमगमदित्येवार्थः। अन्यथोक्ताः श्रुतिस्मृतयो निर्बिषयाः स्युरिति भावः। यत्तु कुशध्वजस्य ब्रह्मर्षेर्बा-

तदेवं महालक्ष्मीत्वादेव श्रीराधायाः पूर्णत्वं निर्बाधम् । श्रीकृष्णप्रेयस्यः खलु सर्वा लक्ष्म्य एव तन्मुख्यत्वात् सा तु महालक्ष्मीरिति सुश्लिष्टम् । "चिन्तामणिप्रकरसद्मसु कल्पवृक्षलक्षावृतेषु सुरभीरभिपालयन्तम् । लक्ष्मीसहस्र-शतसंभ्रमसेव्यमानं गोबिन्दम्" इत्यादेः, "श्रियः कान्ताः कान्तः परमपुरुषः" इत्यादेश्च, "गोप्यो लब्ध्वाच्युतं कान्तं श्रिय एकान्तवल्लभम्" इत्यादेश्च । "यथा राधा प्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा । सर्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभा" इति पाद्मात् । "त्रैलोक्ये पृथिवी धन्या तत्र बृन्दाबनं पुरी । तत्रापि गोपिकाः पार्थ तत्र राधाभिधा मम" इत्यादिपुराणाच्च । "यस्या अंशे लक्ष्मीदुर्गादिका शक्तिः" इति श्रुतिस्तु दर्शितैव ॥२५॥

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

ङ्मयी कन्या वेदबती परमसुन्दरी बिष्णुपतिकामनया तपस्यन्ती रावणेन दुरात्मना धर्षिता दग्धदेहा तद्वधाय जानक्यभूदित्युत्तरकाण्डे श्रीरामं प्रत्यगस्त्येनोक्तं तत्राप्येवं ज्ञेयम् । जानक्यां प्रबिश्य सा तद्वधे निमित्तं बभूवेति । लक्ष्मीत्वादनादिसिद्धा रामात्मा जानकी तस्या नैवं तादृशता सम्भवेत् ॥२४॥

तदेबमित्युक्तप्रकारेणेत्यर्थः । चिन्तामणीति — ब्रह्मसंहितायाम् । अभीति-बननयनचारणगोष्ठानयनप्रकारेण पालयन्तम् । कदाचिद्रहसि गोपाङ्गनाभिर्बिहारमाह-लक्ष्मीति । गोप्य इति श्रीदशमे । गोप्यः श्रिय इत्यन्वयः । श्रीराधायाः श्रैष्ठ्यमाह—यथेति । त्रैलोक्ये इत्यर्जुनं प्रति कृष्णबाक्यम् । धन्या श्रेष्ठा ।

[ पाद २ सिद्धान्तरत्नम् ९७ )

श्रीकृष्णपरिकराणामसमाभ्यधिकप्रेमत्वं तदर्थजलद्विषहृदप्रवेशधावनादितः प्रतीयते यस्माद् भगवतोऽपि गाढवश्यतेति निवेदितं ब्रह्मणा—"एषां घोषनिवासिनामुत भवान् किं देव रातेति नश्चेतो विश्वफलात् फलं त्वदपरं कुत्राप्ययय मुह्यति । सद्वेषादिव पूतनापि सकुला त्वामेव देवापिता यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते" इति ॥२६॥

द्रुहिणादितत्वविद्विस्मापकस्थिरचरबिमोहकवेणुनादमाधुर्य्यन्तु "सबनशस्तदुपधाय सुरेशाः शक्रसर्वपरमेष्ठिपु-

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

नन्वेतत्स्मृतिप्रमाणस्य मूलं श्रुतिप्रमाणं देयमिति चेत्तात्राह-यस्या इति ॥२५॥

अथ सर्वातिशयिप्रेमपूर्णपार्षदत्वमुदाहरति--श्रीकृष्णेति । एषामिति श्रीदशमे ब्रह्मबाक्यम् । हे देब श्रीनन्दसूनो भगबन् एषां त्वद्विनियुक्तधामादीनां घोषनिबासिनां भबान् कि राता किं फलं दास्यतीति बिश्वफलरूपात्त्वत्तोऽपरं फलं कुत्राप्यपश्यन्नश्चेतो बिमुह्यति । किं दत्त्वायमनृणः स्यादिति मोहमेतीत्यर्थः । नन्वेभ्य एतदीयेभ्यो बाऽहमात्मानन्दत्बानृणः स्यामिति चेत्तात्राह-सद्वेषादिवेत्यादि । सकुला बकादिभ्यां भ्रातृभ्यां सहिता । यदिति स्फुटम् ॥२६॥

सवनश इति तत्रैव ब्रजदेवीनां वाक्यम् । कवयः सर्वज्ञा अपि सुरेशास्तत्त्वाः स्वरजातीः सवनशो मन्द्रमध्यतारभेदेनोपधार्य्य समाकर्ण्य अनिश्चिततत्त्वा अज्ञाततत्स्वरूपाः सन्तः केवलं कश्मलं मोहं ययुः । कीदृशास्ते यतो गीतध्वनिराया ति ।

रोगाः । कवय आनतकन्धरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः ॥", "का स्त्र्यङ्ग ते कलपदामृतवेणुगीतसंमोहितार्य्यचरितान्न चलेत्त्रिलोक्याम् । त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्" इत्यादिभ्यः स्थिरचरबिमोहकरूपमाधुर्य्यं चोक्तम् ॥२७॥

"यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम् । बिस्मापनं स्वस्य च सौभगर्द्धेः परं पदं भूषणभूषणाङ्गम् ॥" इत्यादिभ्यस्तु स्वपर्य्यन्तसर्वविस्मापकरूपमाधुर्य्यम् ॥२८॥

"अहो बकीयं स्तनकालकूटं जिघांसयाऽपाययदप्यसाध्वी । लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम"त्यादिभ्यस्तु निरतिशयकारुण्यम् ॥२९॥

---

तत आनताः कन्धराश्चित्तानि च येषां ते । का स्त्रीति—तत्रैव कृष्णं प्रति तासां वाक्यम् । ननु परे पुंसि मयि किमिति निरताःस्थ तत्राह—अङ्ग हे कृष्ण ते कलपदामृतवेणुगीतेन सम्मोहिता सती का स्त्री आर्य्यचरितान्निजधर्मान्न चलेत् । यन्मोहिताः पुंसोऽपि विमुह्यन्तीति भावः । त्रैलोक्येति—स्फुटार्थम् । यद्यतः अविभ्रन्नविभ्रुः । त्वद्गीतकशब्दादेव धर्मत्यागो युक्तः किं पुनस्त्वदनुभवादिति भावः ॥२७॥

यन्मर्त्येत्यादि द्वयमुद्धववाक्यं तृतीये । यद् बिम्बं स्वमूर्तिम् । स्वयोगमायायाः पराख्यशक्तेः प्रभावं दर्शयता त्वया गृहीतं जगति प्रकटितमित्यर्थः । मर्त्येषु या लीला तस्यामौपयिकं तत्सदृशलीलोचितद्विभुजादित्वादतिमनोज्ञमित्यर्थः ॥२८॥



प्रेमादीनां ह्लादिनीसम्बित्साराणामानन्दचिदात्मकब्रह्मस्वरूपचिन्तनसमनुयायित्वान्मुख्यत्वं बोध्यम् । तस्मात् सर्व्वधर्म्माविष्कारात् कृष्णस्य स्वयंरूपत्वं तस्यैवानाविष्कृतसर्व्वधर्म्मस्य परव्योमाधिपत्वम् । तत्तद्धर्म्माबिष्कारतारतम्यादेव कृष्णोऽपि पूर्णतमत्वाद्यवस्थाः कीर्त्तिताः ॥३०॥

---

अहो इति कारुण्यस्यासमोर्ध्वत्वादाश्चर्य्यं तदित्यर्थः । वकी पूतना हन्तुमिच्छयापि स्तनयोः संभृतं कालकूटं विषं यमपाययत् । असाध्वी दुष्टापि धात्र्या उपमातुर्यशोदासख्या अम्बिकायाः किलिवायाश्चोचितां गतिं लेभे । धात्रीवेषमात्रेण यस्तादृश्यै सद्गतिं दत्तवानित्यर्थः । ततोऽन्यं कं वा दयालुं शरणं यामेत्यर्थः । इतोऽन्येषु भगवदवतारेष्वपि नेदृशं कारुण्यं प्रकटमस्तीति भावः ॥२९॥

ननु किमेवं चित्तबिकारः प्रेमा स्तूयते ज्ञानन्तु स्तुत्यं "मृगैर्मृगाणां ग्रहणं पक्षिणां पक्षिभिर्यथा । गजानाञ्च गजैरेवं ज्ञेयं ज्ञानेन गृह्यते" इति मोक्षधर्मे तस्यैव ब्रह्मोपलम्भकत्वस्मरणादिति चेत्तत्राह—प्रेमादीनामिति । आदिशब्दात् प्रणयस्नेहरागमानानुरागमहाभावास्तस्यैवोत्तरोत्तरोत्कर्षादवस्थाभेदा गृह्यन्ते । ज्ञानं खलु तत्त्वंपदार्थानुसन्धिरूपनिर्निमेषवीक्षणवदविचित्रम् । प्रेमादिकन्तु विचित्रमपाङ्गवीक्षणवदिति पूर्वोक्तं स्मर्तव्यम् । भक्तिर्हि न चित्तबिकारः "सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति" इति श्रवणात् । किन्तु संविदाह्लादसारांशरूपा सेति पुरैव निर्णीतम् । प्रकरणार्थं योजयति—तस्मादिति । प्रकटार्थम् । न चैवं कृष्णरूपश्रद्धाजाड्यादपि तु वस्तुस्थित्यैव तथोच्यते यत् कृष्ण-

स एष भगवान् स्वरूपशक्तिसिद्धेऽतिबिचित्रे धाम्नि स्वसदृशैः पार्षदैर्विशिष्टो नित्यं लीलायते । ‘‘स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नीति’’ । ‘‘दिब्ये पुरे ह्येष संव्योम्न्यात्मा प्रतिष्ठितः’’ इति । ‘‘तां वां वास्तून्युष्मसि गमध्ये यत्र गावो भूरिशृङ्गा अयासः । अत्राहुः – तदुरुगा-
यस्य वृष्णः परमं पदमवभाति भूरीति’’ च श्रवणात् । न खलु स्वमहिमपुरप्रतिष्ठा स्वसदृशान् पार्षदान् विना सम्भ-
वति, न च तासां शुभावहबिधिरूपाणां गवाञ्च लीलया बिना स्यादुपयोगः । तामित्यादौ तां तानि वां युवयो राधिकाकृष्णयोर्व्वास्तूनि धामानि गमध्ये लब्धुमुष्मसि कामयामहे, भूरिशृङ्गाः प्रशस्तविषाणाः, वृष्णः स्वजनाभिलाषवर्षिण इति व्याख्येयम् । राधयेत्यादौ लट् प्रयोगेण तैः सह तयोर्नित्यसाहित्यावेदनाल्लीला नित्येति सूचितम् । यस्या अंशे लक्ष्मीदुर्गादिका शक्तिरित्येतद्वाक्यानन्तरं पश्चिमादिक्रमेण सर्व्वेषां पश्चिमे सन्मुखे ललितेत्यादिभिर्निर्दिष्टनाम्नां परिकराणां कृष्णमभितः स्थितिर्दर्शिता सेवा चेति प्रतिज्ञातं विस्फुटम् ॥३१॥

---

रूप एब तारतम्यं बर्ण्यत इत्याह–तद्धर्मेति । ‘‘हरिः पूर्णतमः पूर्णतरः पूर्ण इति त्रिधा’’ इति श्रीरूपचरणैः ॥३०॥

एवं सच्चिदानन्दविग्रहो धर्मी भगवानविचिन्त्यशक्तिरित्यापादितम् । अथ परिकरिणस्तस्य लीला बर्णनीया न हि निस्त-



इदमत्र तत्त्वम् । अनन्तबिज्ञानानन्दवपुषो भगवतः स्वचिच्छक्तिबिलासमयं प्रकृतिस्पर्शशून्यमपरिच्छिन्नं स्वमहिमसंव्योमशब्दितं पुरमतिबिस्तीर्णबहुभूमप्रासादोपमञ्चकास्ति । यत्र नानाविर्भावपरिकरपरिच्छदस्वच्छन्दसमावेशोचितान्यतिबिशालनीवृन्निचयमयानि निरुपमशक्रनीलकुरुबिन्दचन्द्रकान्तादिकान्तानि बिचित्रप्राचीरचत्वरप्रासादादिमहाबासानि मणिचित्रतटाकपीयूषपूर्णसरित्सरोवापीकूपानि कर्पूरपूरायमाणरजांसि प्रतिक्षणसमुल्लसत्तरुवल्लीगुल्मानि रम्यबिहङ्गादिसत्त्वसन्दोहानि कमनीयविमाना–

---

रङ्गार्णववन्नीलाश्मस्तम्भवद् वैकरस्यभाक् सः । तथात्वे धामपरिकरश्रुतिर्व्यर्थाकुप्येत् । तस्मान्नित्यधामपरिकरलील इति प्रतिपादयितुमुपक्रमते–स एष इत्यादिना । स इति छान्दोग्ये । दिव्य इति मुण्डके । तामिति ऋक्षु । अयास इत्यत्र बिप्रास इतिवत् सुक् छान्दसः । ‘‘अयः शुभावहो विधिः’’ इत्यमरः । भूरिशृङ्गा इत्यत्र भूरिशब्दः प्राशस्त्ये लाक्षणिकः । एषु बाक्येषु परिकरलीलयोः स्पष्टमप्रत्ययात्तो प्रत्याययन् व्याचष्टे–न खल्वित्यादिना । राधयेत्यादि बाक्ये तु ते द्वे प्रस्फुटे इति योजयति–राधयेत्यादाबित्यादिना । एवं गोपगोपीगबाबीतमित्यादिकमत्र स्मर्तव्यम् । प्रतिज्ञातमिति—स्वसदृशैः पार्षदैर्विशिष्टः स्वधाम्नि नित्यं लीलायत इति यत् प्रतिज्ञातं तत् श्रुत्या प्रतिपादितमित्यर्थः ॥३१॥

उक्तमर्थं वर्तुलयन्नाह—अनन्तेत्यादि । यत्र नानाविर्भावेति ।

वलिवियन्ति धामानि स्फुरन्ति । येषु परमालौकिकरूपगुणसम्पन्ना मुक्ता नित्यमुक्ताश्च सर्व्वाभिर्हितया श्रीदेव्या सह विविधविनोदवन्तं भगवन्तं नानाविधैरुपचारैरनुकूलयन्तीति ॥३२॥

एवमेवोक्तं जितंते स्तोत्रे । "लोकं वैकुण्ठनामानं दिव्यषाड्गुण्यसंयुतम् । अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ॥ नित्यसिद्धैः समाकीर्णं तन्मयैः पाञ्चकालिकैः । सभाप्रासादसंयुक्तं वनैश्चोपवनैः शुभम् ॥ वापीकूपतड़ागैश्च वृक्षषण्डैः सुमण्डितम् । अप्राकृतं सुरैर्वन्द्यमयुतार्कसमप्रभम् ॥ प्रकृष्टसत्त्वराशिं त्वां कदा द्रक्ष्यामि चक्षुषा । क्रीडन्तं रमया सार्द्धं लीलाभूमिषु केशवमि"त्यादि ॥३३॥

---

"वैकुण्ठभुवने नित्ये निवसन्ति महौज्ज्वलाः" इत्यादिपाद्मात् । अनुकूलयन्ति, अभिरुचितां सेवां कुर्वन्तीत्यर्थः ॥३२॥

अत्र स्मृतिमुदाहरन्ति-लोकमित्यादि । गुणत्रयविवर्जितमप्राकृतमिति वैकुण्ठलोकस्य विशेषणान्मायागन्धास्पृष्टत्वम । तस्य विस्पष्टम । अतस्तु तत्रत्यानां वस्तूनां भगवत्स्वरूपशक्तिबिलासत्वमेवायातमिति बोध्यम् । तन्मयैस्तदाविष्टैः । पाञ्चकालिकैरिति-अभिगमनोपादानेज्याऽध्ययनसमाधयः पञ्च कालास्तेषु भवैस्तदनुष्ठाननिष्ठैरित्यर्थः । प्रकृष्टसत्त्वराशिमिति-सच्चिदानन्दस्वरूपमहापुरुषमित्यर्थः । प्रकृष्टसत्त्वं रजसा तमसा चामिश्रं मायिकं सत्त्वं जडमेवेति न त्रयाणां गुणानां परस्परसंसर्गस्य स्मृतत्वात् । ज्ञानात्मकममायिकमचेतनं तदिति च न तद्भूतस्य भग-



भगवान् सूत्रकारश्चैवमाह । "अन्तरा भूतग्रामवत् स्वात्मनः" इत्यस्मिन्नधिकरणे ॥३४॥

तदेतत् स्वमहिमादिशब्दितं तद्धाम वैकुण्ठद्वार्व्वत्यादि यथोद्ध्वं स्फुरतीति तत्तद्गताविर्भावेषु तत्तदभिमानेषु विशेषश्चेति विमृष्टागमानां विदुषां निश्चयः ॥३५॥

---

वद्विग्रहस्य परमात्मत्वोक्तिव्याकोपात् । तस्माद् भगवदभिन्ना चिदानन्दसद्रूपा परा शक्तिस्तदिति तत्त्ववादिनः ॥३३॥

अथ परमर्षिनिर्णयोऽप्येवमस्तीत्याह-भगवानिति । "दिव्ये पुरे ह्येष संव्योम्न्यात्मा प्रतिष्ठितः" इति वाक्ये किमाकाश एव हरेर्लोकः. उताकाशवद् व्यापको विचित्रप्राकारप्रासादादिरूप इति सन्देहे आकाशः स्याद्वाचनिकत्वात् । पुरत्वं तस्य रूपकेणोच्यते इति प्राप्ते—अन्तरेति । स्वात्मकसंव्योमभूतस्य पुरस्याऽन्तरा मध्ये स्थितं प्राकारादि वस्तु स्वात्मना भूतग्रामवत्त स्फुरति "यमेवैष वृणुते तेन लभ्यः" इत्यादि श्रवणात् स्वानुग्रहभाजनस्य जीवस्य भूम्यादि निर्मितवद् विभाति । वच्छब्देन भूतग्रामत्वं तस्य निरस्तम् । तत्रैव तस्य ब्रह्मात्मकत्वमुक्तम् । "ब्रह्मैवेदममृतं पुरस्तात् पश्चाच्च ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्" इति मुण्डके । स्वे महिम्नीत्यनेनाप्येवं वोध्यते ॥३४॥

अथ सन्निवेशविशेषं तस्य धाम्नोऽवगमयति—तदेतदित्यादिना । वैकुण्ठोपरि द्वार्वती तदुपरि मधुपुरी तदुपरि तु गोकुलमित्यूर्ध्वोर्ध्वं विभातीत्यर्थः । विमृष्टागमानामिति । स्वायम्भुवागमादिषु वैकुण्ठोपरि कृष्णलोको वर्णितः । ब्रह्मसंहिताबृहद्वामनहरिवंशेषु तु सर्वोपरि गोलोकः गोकुलाभिधानः स्वतन्त्रः कृष्ण-

यान्येव धामानि तत्तल्लीलार्थमजाण्डेऽप्याविःस्युरिति स्कान्दे स्मर्य्यते। "या यथा भुवि वर्त्तन्ते पूर्य्यो भगवतः प्रियाः। तास्तथा सन्ति वैकुण्ठे तत्तल्लीलार्थमादृता" इति। आसु दिव्यत्वास्फुर्त्तिस्त्वसंस्कृतदृशामेव भगवति नरदाररूपत्वादिवत्। तथापि तद्दृष्ट्या शुभलोकप्राप्तिरतादृशभगवद्दृष्ट्यैवेति "न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्ति"रिति सूत्रात्तद्भावाच्च। तस्मात्तत्र तैः सहासौ नित्यं लीलायते बाल्यपौगण्डकैशोरसम्बन्धास्ता लीला नित्या विभान्तीति सिद्धम् ॥३६॥

लोको निरूप्यते। स च परिकरलीलाभेदेनांशभेदात् द्वार्वत्यादित्रिरूपो बाच्यः। या यथा भुवीत्यादि स्कान्दोक्तेश्च। यत्तु पाद्मोत्तरखण्डे महावैकुण्ठस्यावरणतया तस्य पूर्वादिषु दिक्षु दशावतारस्थानानि क्रमाद् गणयित्वा श्रीकृष्णस्य नवमत्वेन तत्स्थानस्य ब्रह्मादिगावरणत्वमुक्तम्। तत्रापि तस्य सर्वोर्ध्वत्वमेवाभिमतम्। तस्य तथाभूतस्यापि तदावरणत्वेनोक्तिस्तस्य ग्रन्थस्य तत्परत्वादवगम्यते। अन्यथा स्वायम्भुवागमादिबहुग्रन्थव्याकोपापत्तिः। विशेषस्तु श्रीकृष्णसन्दर्भे द्रष्टव्यः ॥३५॥

मत्स्याद्यवताराणां यानि स्थानानि परमव्योम्नि सन्ति तानि प्रपञ्चेऽपि तद्वदाविर्भवन्त्यतस्तान्यप्राकृतानीति प्रतिपादयति—यान्येवेति। या यथेति। आदृता ब्रह्मादिवन्दिताः। आस्विति—ब्रह्माण्डान्तर्गतासु पूर्ष्वित्यर्थः। असंस्कृतेति—भक्तिसंस्कारशून्यधियामित्यर्थः। नरदारकेति——मायिकनृबालकत्वादिवदित्यर्थः। तादृशेति—नरदारकतया प्रतीतस्यापि भगवतो दर्शनेनेत्यर्थः।



अत्राहुः। तद्देशतत्कालतत्परिकराविच्छेदे सत्येव तासां नित्यत्वं स्यान्नचैवं सम्भवति। देशादिभेदादेकस्य परिकरस्य पूर्व्वोत्तरवर्त्तित्वेनानेकलीलासम्बन्धस्मरणाच्च। पूर्व्वस्या लीलाया नित्यत्वेन तत्सम्बन्धिनः परिकरस्यापि सम्बन्धस्तत्र नित्यं स्यात्। तथा सत्युत्तरस्यां तस्य सम्बन्धो

न सामान्यादिति ब्रह्मसूत्रम्। अस्यार्थः। "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति श्रुतौ, "एतदन्तो नृणां क्लेशो यद्भवानक्षिगोचरः" इति स्मृतौ च भगवतो दर्शनान्मुक्तिरित्युक्तम्, तन्न युक्तम्। अवताराऽवसरे तद्दृष्टिमतामपि मुक्तेरप्रत्ययादिति चेत्तत्राह—नेति। अपिरवधारणे। सामान्यादिति। टाविभक्तेरात् सुपां सुलुगित्यादिपाणिनिसूत्रात् सामान्येन सर्वसाधारण्येन मायाजवनिकाच्छन्नभगवद्विषयतया योपलब्धिर्दृष्टिस्ततो न मुक्तिः मृत्युवत् मरणमात्राद्यथा सा न स्यात्। तर्हि सामान्योपलब्धिरपार्था स्यात्तत्राह—न हीति। न साऽपार्थेत्यर्थः। तत्फलं किमिति चेत्तत्राह—लोकेति। स्वर्गादिलोकप्राप्तिस्तत्फलमित्यर्थः। "सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनात्" इति स्मरणात्। योग्येति—परमप्रेमास्पदचिद्विग्रहत्वेन तद्वीक्षणात्तु मुक्तिरित्यर्थः ॥ ३६ ॥

अत्राहुरिति। अत्र लीलानित्यत्वे विषये शब्दबुद्धिकर्मणां त्रिक्षणावस्थायित्वं वदन्तस्तार्किकाः पूर्वपक्षं रचयन्तीत्यर्थः। देशादिभेदादिति-न ह्येकस्मिन् देशे काले वा स्थूणाश्मवद्भगवान् सर्वेश्वरस्तत्परिकरो वाऽस्ति। निकेतजाग्धगोचारणरासनृत्यादीनां लीलानां देशभेदेन कालभेदेन परिकरभेदेन च संभवः

दुर्घटः । स्वीकृते च तस्मिन् पूर्ब्बस्या अनित्यत्वम् । नित्यत्वे चोत्तरसम्बन्धिनस्तस्यान्यत्वं भवेत् । तस्माद्धियत्पुष्पायमाणं भवतां लीलानित्यत्वमिति चेत् ॥३७॥

अत्रोच्यते – अनभिज्ञो भवान् अचिन्त्यस्य भगवत्तत्त्वस्य यदौपनिषदं तत् । तथाहि छान्दोग्ये "भूमैव सुखं भूमात्वेव विजिज्ञासितव्य" इति भूमानमुद्दिश्य तस्य लक्षणमुच्यते । "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति । अत्र भूमानं प्राप्तस्य तदितरदर्शनादि प्रतिषि-

---

प्रतीयते । बाल्यपौगण्डलीलायां पूर्वपूर्बस्यां कैशोरलीलायां चोत्तरस्यां स एव बालकः पित्रादिः परिकरः । सह्मजग्धिगोचारणनियुद्धादिषु पूर्बोत्तरेषु स एव वयस्यगणः । संभोगविप्रलम्भयोः पूर्बोत्तरयोः स एव किङ्करीगणः सखिगणश्चेति विभावनीयम । एव श्रीदाशरथ्यादेर्लीलासु च सुधीभिरनुसन्धेयम । इत्थं चैकस्य परिकरस्य पूर्बोत्तरवर्त्तित्वेन लीलामुपरि करबिच्छेदे सिद्धे तेन कृति दर्शयति पूर्बस्या–इत्यादिना । तत्संबन्धिनः पूर्बलीलाङ्गस्य पित्रादेः । तथा सति तस्य पूर्व्वलीलायां नित्यसम्बन्धे स्वीकृते सतीत्यर्थः । तस्य पूर्व्वलीलाङ्गस्य पित्रादेः स्वीकृते चेति उत्तरलीलायां तस्य पित्रादेः सम्बन्धेऽङ्गीकृते सम्बन्धघटितायाः पूर्व्वलीलाया नित्यत्वाभावः स्यादित्यर्थः । नित्यत्वे चेति तत्सम्बन्धघटितपूर्बलीलाया नित्यत्वे बा स्वीकृते सत्युत्तरलीलायामन्यः पित्रादिः स्यान्न चैवं स्मामर्य्यते । तथाच प्रागुत्तरं चान्यान्यलीलोदयात् पूर्बपूर्बासां बिनाशादनित्या लीलेति भावः ॥३७॥

पूर्व्वपक्षं निराकुर्ब्बन्नाह अत्रोच्यते इति । भूमैवेति नारदं



ध्यते । अनन्तरं तु मृत्यादिहेयदर्शनं निषिध्य पुनस्तस्य सर्ब्बदर्शनमुच्यते । "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखिताम् । सर्व्वं ह पश्यः पश्यति सर्व्वमाप्नोति सर्व्वश" इति । अत्र सर्व्वशब्देन विविधवैचित्र्यवत्यो बाल्यादिसम्बन्धास्तस्य लीलाः कथ्यन्ते । ताः कार्त्स्न्येन पश्यति स्वस्य तत्परिकरत्वेन तदङ्गत्वादाप्नोति च यथाधिकारमिति । इह बाल्यादिसम्बन्धानां तासां मिथो वैलक्षण्यात् कैशोरसम्बन्धानां संयोगवियोगात्मना स्फुटद्वैविध्यत्वाच्च वैविध्यवैचित्र्ये सुव्यक्ते ॥३८॥

---

प्रति सनत्कुमारस्य वचनम् । वैपुल्यधर्म्मा सुखरूपः सर्व्वेश्वरो जिज्ञास्य इत्यर्थः । यत्रेति यत्र भूम्न्यनुभूयमाने सति सभूमानुभवी ततोऽन्यत्र पश्यति जलधिनिमग्नो यथा जलराशेरन्यन्न पश्यति तद्वदित्यर्थः । अनन्तरमिति तस्य भूमोपासकस्य, न पश्य इति तत्रैव तं प्रति तद्वाक्यम् । पश्यो भूमध्यायी भक्तः । मृत्युरोगदुःखितान् संसारधर्म्मान्न पश्यति किन्तु भूमानमापद्य तस्य सर्व्वं बिशेषं पश्यतीत्यर्थः । अत्र भूम्नो निर्व्विशेषत्वे सर्व्वशब्दोपादानं निरर्थकं स्यादतः सर्व्वशब्देन तस्य गुणचरितानि बोध्यन्ते । एतदेव व्याख्याति सर्व्वशब्देनेति । स्फुटद्वैविध्यत्वात् प्रकटद्वैबिध्यत्वदित्यर्थः । धाप्रत्ययस्य द्वितयोश्च धमनिति धमुन्नादेशः– धमुन्नन्तात् स्वार्थे ददर्शनमितिङप्रत्ययः । ततो द्वैविध्यत्वादिति सिध्यति ॥३८॥

अथ मिथो बिलक्षणासु देशकालभेदेन जायमानासु बह्वीषु तास्वेकस्य परिकरस्य युगपत्साक्षिध्यासम्भवात् कथं सर्व्वप्रकारकदर्शनप्राप्तिः सम्भवेतां, तदसम्भवे वा कथं तासां तद्योगघटितानां नित्यविशङ्कायां तदनन्तरमिदं पठ्यते–“स एकधा भवति द्विधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश स्मृतः । शतं च दश चैकं च सहस्राणि च विंशतिः” इति । अत्र सिद्धिबलाद्बहूनि रूपाणि तस्य लीलाप्रेप्सोराविर्भवन्ति । तैरसौ तत्र तत्र संनिदध्यादिति तस्य सर्वत्रैकरात्तदविच्छेदसिद्धिरतो न काचिदनुपपत्तिः ॥३९॥

---

भगवति लीलाः साधिताः । अथ तदङ्गभूतानां देशकाल-परिकराणामविच्छेदः साध्यते अथेत्यादिना । तासु लीलासु, तदसम्भवे वेति तस्य परिकरस्य तत्तद्देशतत्तत्कालसम्बन्धेन जायमानासु लीलासु युगपत् साक्षिध्यासम्भवे वेत्यर्थः । तासां तद्योगघटितानामिति । तत्तद्देशतत्तत्कालतत्तत्परिकरसम्बन्धाना-मित्यर्थः । तत्र तावदेकस्य परिकरस्य युगपत्तासु सन्निधिं प्रति-पादयति । स इति । तत्रैव तद्वाक्यं स मुक्तो भूमभक्तः । सिद्धिः सत्यसङ्कल्पता । लीलाप्रेप्सोः सर्व्वा लीलाः साक्षाच्चिकीर्षोः सर्व्वत्र सर्व्वासु लीलासु तदविच्छेदसिद्धिर्निखिललीलासु साक्षि-ध्योपपत्तिः । यद्यपिस एकधेति वाक्यं साधनमुक्तपरं प्रकरणात् तथाप्युपलक्षणतया कैमुत्येन वा नित्यमुक्तानां जीवानां परा-वताराणाञ्च पार्षदानां ग्रहणाय भावीति बोध्यम् ॥३९॥



ईदृशलीलाविशिष्टमेव स्वरूपं रसशब्दितम् । तदवाप्त-स्यैव परमानन्दं इति श्रुतिराह–“रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति” इति । संयोगस्येव वियोगस्यापि रस-त्वेन भगवद्रूपत्वात्तज्ज्ञानमपि तदनुभव एवेति तस्य सार्व-दिकसाक्षात्कारसिद्धिः । तेन तेन च विशिष्टा खलु लीला नित्या । तत्राद्ये बहिरन्त्ये तु हृद्येव साक्षात्कृतिः । इत्थं च सार्वदिकसाहित्यसत्त्वेऽपि सायं वीक्षाप्रतिज्ञा साम्प्रतं परिष्वङ्गाभ्यर्थनादयो व्यवहाराः सिध्येयुरिति श्रुतितात्प-र्यसहायवानेष निर्णयः । धाम्नः समयस्य च भगवदात्म-कस्य सर्वत्र साक्षिध्यं वक्ष्यते । अलौकिकेऽचिन्त्यवस्तुनि तर्कानवतारो न दूषणमपि तु भूषणमेव महिमोन्नाहात् ॥४०॥

अत्राहुः । ननु लीलायाः क्रियात्वात् प्रत्यंशमप्या-रम्भसमाप्तिभ्यां तस्याः सिद्धिर्वाच्या, ताभ्यां विना तत्-स्वरूपनाशापत्तिः, अतः कथमसौ नित्येति चेत् ॥४१॥

---

रस इति तैत्तिरीयके, स भगवान् रसः पञ्चविधरसात्मा, अयं तदु-पासकः । ननु गोचारणादौ प्रवृत्तो भगवति निकेतस्थानां भक्तानां तत्साक्षात्काराभाव इति चेत्तत्र समादधदाह–संयोगस्यैवेति । तज्ज्ञानं ‘वियोगज्ञानम्, तस्येति भगवतः, तेन तेन चेति संयोगेन चेत्यर्थः । सायमिति गोचारणाय गच्छतो भगवतः साय-मागत्य त्वामहं द्रक्ष्यामि देहि मे सांप्रतं परिष्वङ्गमित्यावास-स्थितैर्भक्तजनैः सह व्यवहारः सिध्येत् । संयोगवियोगात्मना रसस्योदयमानत्वादिति भावः ॥४०॥

अत्रोच्यते-भगवति सदैवाकारानन्त्यात् प्रकाशानन्त्याल्लीलानन्त्यादनन्तब्रह्माण्डानन्तवैकुण्ठगतानां तत्तल्लीलास्थानानां तत्तत्पार्षदानां च व्यक्तिप्रकाशानन्त्याच्च नानित्यत्वं तस्याः । तत्तदाकारप्रकाशगतयोस्तत्तदारम्भसमाप्त्योः सत्योरप्येकत्रैकत्र तत्तत्क्रियांशा यावत् समाप्यन्ते न समाप्यन्ते वा तावदेवाऽन्यत्राऽप्यारब्धाः स्युरित्येवं तस्मिंस्तदविच्छेदान्नित्यैव सेति । तत्र क्वचित् किञ्चिद्वैलक्षण्येन क्वचित्त्वेकरूप्येणारम्भः विशेषणानां भेदादभेदाच्च ॥४२॥

---

ननु सन्तु भगवति बिचित्रा लीलास्तत्तद्देशादिसम्बद्धाः नित्यास्तु ता न स्युरारम्भसमाप्तिमत्त्वादिति तार्किकाः पुनः प्रत्यवतिष्ठन्ते-नन्वित्यादिना । विकसितार्थमेतत् ॥४१॥

समादधाति-भगवतीत्यादिना । भगवत्याकारानन्त्यं "एकोऽपि सन् बहुधा योऽवभाति", "एकानेकस्वरूपाय" इत्यादिश्रुतिस्मृतिभ्यः । लीलानन्त्यं "जन्मकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः । न शक्यन्तेऽनुसंख्यातुमनन्तत्वान्मयापि हि" इत्यादिस्मृतिभ्यः । ब्रह्माण्डनन्त्यम "अण्डानां तु सहस्राणां सहस्राण्ययुतानि च । तादृशानां तथा तत्र कोटिकोटिशतानि च" इत्यादिस्मृतिभ्यः । वैकुण्ठान्त्यं च "तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि" इति श्रुतेः । पार्षदानन्त्यं च "स एकधा" इत्यादिश्रुतेः । एवं भगवद्रूपादीनामानन्त्यमापाद्य लीलानित्यत्वार्थमविच्छेदं तस्याः समर्थयति—तत्तदाकारेति । एकत्रैकत्रेत्येकैकस्मिन् प्रकाशे, अन्यत्रान्यत्रेत्यन्यस्मिन् प्रकाशे इत्यर्थः । तद-



नन्ववस्त्वविच्छेदः, कथं सैव वर्त्तते इत्युच्यते पृथगारम्भाद्भिन्नैव सेति चेत् उच्यते-कालभेदेनोदितानामपि तुल्यरूपाणां क्रियाणामैक्यं यथा परेषामपि द्विर्गोशब्दोऽयमुच्चारितो न तु द्वौ गोशब्दाविति प्रतीतिनिश्चितं शब्दैकत्वं यथा च द्विः पाकोऽनेन कृतो न तु द्वौ पाकाविति क्रियैक्यं च, तथैतत् प्रत्येतव्यम् । अत एवमाह श्रुतिः "यद्भूतं भवच्च भविष्यच्च" इति, "एको देवो नित्यलीलानुरक्तो भक्तव्यापी भक्तहृद्यन्तरात्मा" इति च, स्मृतिश्च "जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन" इति । ईदृशावगतिस्त्वतिरहस्या भगवदनुग्रहैकसाध्येति—"यावानहं यथाभावो यद्रूपगुणकर्मकः । तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात्" इति तदुक्तेः ॥४३॥

---

बिच्छेदात् क्रियाबिच्छेदबिरहादित्यर्थः । क्वचिदिति-क्वचिन्मातुरङ्के स्थितः क्वचित्तु स्वर्णपीठे निबिष्टो हैयङ्गबीनमत्ति हसति चेति बिशेषणयोर्भेदो भाव्यः ॥४२॥

लीलाङ्गानां देशकालपरिकराणामैक्यं प्राक् प्रतिपादितम् । अथ समानरूपाणां तासां पृथगुदितानामप्यैक्यं प्रतिपाद्यते । तत्राशङ्क्यते-नन्ववस्त्विति । अत्र शाब्दिकसम्मतं दृष्टान्तयुगलमाह यथेति । परेषां मायिनाम् । ते हि "शब्द इति चेत्" इति सूत्रे उपचर्यमनेनैवं बिमसृशुः । यद्भूतमिति—बृहदारण्यके पठ्यते । ब्रह्मनिष्ठं गुणकर्मलक्षणमर्थजातं नित्यं गतभवद्भविष्य-

